॥ श्रीजिनायनमः ॥

# ॥ श्रीगौतमपृच्छावृत्तिः ॥

---

छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज.

( जामनगरवाला. )

संवत्—१९६६ सने १९०९

कि—रु.—१—०—०

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीगौतमपृछावृत्तिः प्रारभ्यते ॥

छपावी प्रसिद्ध करनार—पंमित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीर जिन प्रणम्यादौ । बालाना सुखबोधिका ॥ श्रीमद्गौतमपृछायाः । कुर्वेऽहं वृत्तिमद्भुता ॥ १ ॥ गाथा—नमिऊण तिच्छनाहं । जाणंतो तहय गोयमो भयवं ॥ अबुहाण बोहणच्छं । धम्माधम्म फलं पुछे ॥ १ ॥ व्याख्या—नत्वा तीर्थनाथं जानन् तथा गौतमो भगवान् अबुधाना बोधनार्थं धर्माधर्मफलं पप्रछ ॥ १ ॥ गाथा—भयवं सुच्चिय नरयं । सुच्चिय जीवो पयाइ पुण सग्गं ॥ सुच्चिय किं तिरिएसु । सुच्चिय किं माणुसो होइ ॥ २ ॥ व्याख्या—हे भगवन् स एव जीवश्च्युत्वा नरकं याति? स एव जीवः पुनः स्वर्गं किं याति? स एव जीवस्तिर्यक्षु किमुत्पद्यते? स एव जीवो मनुष्यः किं भवति? ॥ २ ॥ गाथा—सुच्चि य जीवो पुरिसो । सुच्चि य इच्छी नपुंसओ होइ ॥ अप्पाऊ दीहाऊ । होइ अ-

ज्ञोगी सज्ञोगी य ॥ ३ ॥ व्याख्या—स एव जीवः पुरुषः, स एष जीवः स्त्री, स एव जी-
वो नपुंसको ज्ञवति, तथा स एवाऽल्पायुर्दीर्घायुरज्ञोगी सज्ञोगी च ज्ञवति ॥ ३ ॥

गाथा—केण व सुहवो होइ । केण व कम्मेण दूहवो होइ ॥ केण व मेहाजुत्तो । दु-
म्मेहो कहं नरो होइ ॥ ४ ॥ व्याख्या—हे ज्ञगवन् केन कर्मणा स सुज्ञागी ज्ञवति? वा-
केन कर्मणा दुर्ज्ञागी ज्ञवति? केन कर्मणा बुद्धिवान् ज्ञवति? कथं च स नरो डुर्मेधा ज्ञवति?
॥ ४ ॥ गाथा—कह पंमिऊ अ पुरिसो । केण व कम्मेण होइ मुरुकत्तं ॥ कह धीरु
कह ज्ञीरु । कह विज्जा निप्फला सफला ॥ ५ ॥ व्याख्या—हे ज्ञगवन् पुरुषः कथं पंमि-
तो ज्ञवति? केन कर्मणा वा तस्य मूर्खत्वं ज्ञवति? कथं स धीरो ज्ञवेत्? कथं च स ज्ञी-
रुर्ज्ञवेत्? कथं तस्य विद्या निष्फला ज्ञवति? कथं च तस्य सफला विद्या जायते? ॥ ५ ॥

॥ गाथा—केण विणस्सइ अत्थो । कह वा मिलइ कहं थिरो होइ ॥ पुत्तो केण न जी-
वइ । बहुपुत्तो केण वा बहिरो ॥ ६ ॥ व्याख्या—केन कर्मणाऽर्थो विनश्यति? कथं वा स
मिलति? कथं च स्थिरो ज्ञवति? केन कर्मणा पुत्रो न जीवति? केन कर्मणा वा जनो ब-

तम- हुपुत्रो ज्ञवति? केन कर्मणा च जनो बधिरो ज्ञवति? ॥ ६ ॥ गाथा—जच्चंधो केण पृच्छावृ०
नरो । केण व भुत्तं न जिज्जइ नरस्स ॥ केण व कुट्ठी कुज्जो । कम्मेण य केण दासत्तं ॥
॥ ३ ॥ ॥ ७ ॥ व्याख्या—हे ज्ञगवन्! केन कर्मणा नरो जात्यंधो ज्ञवति? वा केन कर्मणा तस्य
भुक्तमपि न जीर्यति? केन कर्मणा वा कुष्ठी कुब्जश्च स ज्ञवति? केन कर्मणा च तस्य दा-
सत्व ज्ञवति? ॥ ७ ॥

गाथा—केण दरिद्दो पुरिसो । केण कम्मेण इसरो होइ ॥ केण य रोगी जायइ । रो-
गविहूणो हवइ केण ॥ ८ ॥ व्याख्या—केन कर्मणा पुरुषो दरिद्री ज्ञवति? केन कर्मणा
चेश्वरो ज्ञवति? केन च कर्मणा रोगी ज्ञवति? केन कर्मणा च रोगरहितो ज्ञवति? ॥ ८ ॥

गाथा—कह हीणंगो मूत्रं । केण व कम्मेण टुंटञ्ज पंगू ॥ केण सुरूवो जायइ । रू-
वविहूणो हवइ केण ॥ ए ॥ व्याख्या—हे ज्ञगवन्! पुरुषो हीनांगो मूकश्च कथं ज्ञवति? ॥ ३ ॥
वा केन कर्मणा टुंटकश्चरणहीनश्च ज्ञवति? केन कर्मणा च स सुरूपो जायते? रूपविही-
नश्चापि केन कर्मणा ज्ञवति? ॥ ए ॥ गाथा—केणवि बहुवेअणत्तो । केण व कम्मे-

ण वेयणविमुक्को ॥ पंचेंदिउवि होइ । केणवि एगेंदिउ होइ ॥ १० ॥ व्याख्या—हे नग-
वन् केन कर्मणा प्राणी बहुवेदनार्त्तो नवति? वा केन कर्मणा वेदनाविमुक्तो नवति? केन
कर्मणा जीवः पंचेंडियो नवति? केन च कर्मणा स एकेंडियो नवति? ॥ १० ॥ गा-
था—संसारोवि कह थीरो । केणवि कम्मेण होइ संखित्तो ॥ कह संसारं तरिउं । सिद्धिपु-
रं पावइ पुरिसो ॥ ११ ॥ व्याख्या—हे नगवन् कथं संसारः स्थिरीनवति? केन कर्मणा
च स संसारः संक्षिप्तो नवति? तथा पुरुषः संसारसागरं तरित्वा कथं सिद्धिपुरीं प्राप्नोति?
॥ ११ ॥ गाथा—सव्वजगजीवबंधव । सव्वन्नू सव्वदंसि मुणिंद ॥ सव्ववछल नयवं । कस्स य
कम्मस्स फलमेयं ॥ १२ ॥ व्याख्या—हे सर्वजगज्जीवबंधव! हे सर्वज्ञ! हे सर्वदर्शिन्! हे
मुनींड! हे सर्ववत्सल! हे नगवन्! कस्य कर्मस्यैतत्फलं तत्कथयत? ॥ १२ ॥ गा-
था—एवं पुठो नयवं। तियसिंदनरिंदनमियपयकमलो॥ अह साहिउं पयत्तो । वीरो महुरा-
इ वाणीए १३ ॥ व्याख्या—एवममुना प्रकारेण पृष्टः सन् नगवान् महावीरो मधुरवाण्या
कथयितुं प्रवृत्तः, किं विशिष्टो वीरः? त्रिदशेंडनरेंडनमितपदकमलः ॥ १३ ॥ श्रीनगवद्वा-

एवा महानतिशय', अतः श्रोतु कष्टं न भवति, क्षुत्तृट् च न लगति. तत्र दृष्टांतमाह—

॥ एकस्मिन् ग्रामे एको वणिक् वसति, तस्य गृहे एका वृद्धा कर्मकरा भारवाहिका वर्त्तते, सैकदा वने समित्काष्ठभारमाहर्त्तुं गता, मध्याह्ने क्षुत्पीडिता इंधनं गृहीत्वा तस्य गृहे समागता, श्रेष्ठिना सा दृष्टा, पृष्टा च इधन स्तोकं कथमानीत? पुनरपि त्व वने याहि? पश्चादागत्य भोक्तव्य तदा सा वृद्धा क्षुत्पीडिता वने गता, पुनरिंधन गृहीत्वा शिरस्युत्पाद्य चलिता, मार्गे चरणस्खलनत एकमिधनं पतित, तदा सा तद्गृहीतु नम्रीभूता. इतस्तस्मिन् वने श्रीवीर' समवसृत' सन् देशना ददाति भव्यानामग्रे तृतीयप्रहरे, तदा तया वृद्धया सा जिनवाणी श्रुता, तन्निर्माहात्म्यतस्तस्या' क्षुद्भता तृडपि गता, तद्गिरास्वादतस्तत्रैव सा स्थिता, तदा गौतमस्ता तत्रैव तथावस्था स्थिता दृष्ट्वा श्रीवीरंप्रति कथयति, हे भगवन् इयं वृद्धा कथमत्रैवैव स्थितास्ति? तदा भगवता प्रोक्तं भो गौतम! अर्हद्वाणीप्रभावत इयं स्थितास्ति. ततः श्रीवीरमुखात्सर्वैरपि तस्या' वृत्तातः श्रुतस्तदा ते चिंतयितु लग्ना अहो वीतराग वाण्या महानतिशयो वर्त्तते. अथ देशनानन्तर सा गृहे समागता; तदा श्रेष्ठिनोक्तं त्वं क-

थं शीघ्रं नाऽयाता? तयोक्तं न्नो श्रेष्ठिन् मया जिनवाणी वने श्रुता, तद्रसेन च मदीया क्षुत्तृषा च प्रशांता; तेन कारणेन चाहं शीघ्रं नायाता. पश्चात्तया श्रीजिनधर्मोपरि न्नावः समुत्पादितः, तेन च सा सुखिनी जाता. अत एव धर्मेच्छुन्निर्जिनवाणी श्रोतव्या.

अथ श्रीमहावीरस्वामी पूर्वोक्ताऽष्टचत्वारिंशत्प्रश्नानामुत्तराणि श्रीगौतमगणधरंप्रति कथयति. तत्र प्रथमः प्रश्नो यथा—केन कर्मणा जीवो नरकं याति? तस्योत्तरं त्रिन्निर्गाथान्निराह—गाथा—जो घायइ सत्ताइं। अलियं जंपेइ परधनं हरइ॥ परदारं चिय वच्चइ। वहुपावपरिग्गहासत्तो॥ १४॥ चंडो माणी कुद्धो। मायावी निठुरो खरो पावो॥ पिसुणो संगहसीलो। साहूणं निंदत्त अहमो॥ १५॥ आलप्पालपयंपी। सुदुठबुद्धी य जो कयग्घो य॥ वहुदुक्खसोगपन्नरो। मरिउं नरयंमि सो याइ॥ १६॥ व्याख्या—यो जीवः सत्वान् मारयति, पुनरसत्यवचनं ब्रूते, पुनरदत्तं वस्तु यो गृह्णाति, पुनः परदारेषु गमनं करोति, पुनर्वहुं परिग्रहं मेलयति, पुनर्यश्चंमो न्नयंकरो, मानी अहंकारी क्रुद्धो मायावी निष्ठुरः खरः कठोरचित्तः पापी पिशुनोऽसंगशीलः कुसंगकृत्, साधूनां निंदकः, अधर्मी, असंवद्धवचनप्रज-

क्षपक., कुटबुद्धि, च पुनर्य. कृतघ्नो भवति स बहुदुःखप्रचुरोऽत्यत दुःखी सन् मृत्वा नरकं याति, यथाऽष्टमश्चक्रवर्त्ती सुभूमो महापापत सप्तमं नरकं गत, तस्य संबंधमाह—

वसंतपुरसमीपे एकं वनं वर्त्तते, तत्र वनाश्रमे जमदग्निस्तापसस्तपः करोति, स सर्वत्र जनपदेषु प्रसिद्धोऽभूत्, इतो देवलोके द्वौ मित्रदेवौ स्त, एको वैश्वानरनामा देवो महाश्राद्धधर्मो जिनभक्तिरचनरक्तः, द्वितीयश्च धन्वंतरिनामा देवो महाशैवधर्मी तापसर्धिभक्तश्च, द्वावपि तावात्मीय धर्मं प्रशसतः, एकेनोक्तं श्रीजैनसदृशः कोऽपि धर्मो नास्ति, द्वितीयेन चोक्तं शैवधर्मसदृशोऽन्यो धर्मो न. द्वावपि वाद कुर्वंतौ स्वस्वधर्मपरीक्षार्थं मनुष्यलोके समागतौ. अथ जैनधर्मिणा वैश्वानरदेवेनोक्तं जिनधर्ममध्ये जघन्यो नवदीक्षितो यः साधुस्तस्य परीक्षा कर्त्तव्या; शिवधर्ममध्ये च य पुरातनस्तापसस्तस्य परीक्षा कर्त्तव्या. इतो मिथिलानगर्या. पद्मरथो राजा राज्य त्यक्त्वा चंपानगर्यां श्रीवासुपूज्यस्य द्वादशमतीर्थंकरस्य पार्श्वे दीक्षा गृहीतवान्. तं पद्मरथ नवीन साधु दृष्ट्वा तावपि देवौ तत्रागत्य तस्य परीक्षा कर्त्तुं प्रवृत्तौ. नानाप्रकाराणि मिष्टभक्तानि शीतलानि पानीयानि च तस्मै ताभ्यां दर्शितानि, भ-

र्कं च ज्ञो साधो गृहाणेमानि! तानि दृष्ट्वा क्षुधा तृषा पीडितोऽपि साधुरग्राह्याणि ज्ञात्वा न गृहीतवान्. एवं साध्वाचाररक्षणार्थमेका परीक्षा जाता. अथ द्वितीयां परीक्षां कुरुतः, एकस्मिन् ग्राममार्गे ताभ्यां कंटकाः कर्कराश्च विकुर्विताः, द्वितीयमार्गे च मंडुक्यो विकुर्विताः, स साधुर्महानुभावो जीवदयापालनार्थं तं मंडुकीसत्कं मार्गं त्यक्त्वा सकंटकमार्गे याति, तैः कंटकैश्च तस्य महोपसर्गो जातः, पादाभ्यां रुधिरं स्थाने स्थाने निस्सरति, तथापि स स्वधर्मान्न परिभ्रष्टः ।

अथ तौ तस्य तृतीयां परीक्षां कुरुतः, ताभ्यां दिव्यमायया मनोहररूपलावण्योपेताः स्त्रियो विकुर्विताः, ताः स्त्रियस्तस्य साधोरग्रे नानाप्रकाराणि नृत्यादीनि हावभावान् भोगप्रार्थनादीनि च कुर्वंति, तथापि तस्य साधोर्मनो मनागपि स्वधर्मान्न चलितं. पुनस्ताभ्यां नैमित्तिकरूपं विधाय तस्मै साधवे प्रोक्तं, भो साधो आवां ज्ञानिनौ नैमित्तिकौ स्वः, अधुनापि तवायुर्बहु वर्त्तते, अतो यौवनवयसि किमर्थं तपः करोषि? नानाशृंगाररसादियुतान् भोगान् भुंक्ष्व? अधुनैवैवंविधं कांचनसदृशं शरीरं तपसा त्वया कथं शोष्यते! एतन्न युक्तं, वृद्धत्वे

त्वया चारित्रं ग्राह्यं तदा मुनिना प्रोक्तं यदि ममायुर्दीर्घमस्ति, तदाहं बहुकालं चारित्रं पालयिष्यामि, धर्मं च करिष्यामि, शरीरं च मे तेन निर्मलं नविष्यति, किं च यौवनवयोविना धर्मोऽपि न नवति; वृद्धत्वे किं स्यात्! शरीरे जर्जरीनूते सति क्रियातपआदि किमपि न नवति. धन्यं मम नाग्य, येन मे चारित्रोदयो जातः, एवं चतुर्निः परीक्षानिः परीक्षितोऽप्यसौ यदा न चलितस्तदा तौ देवौ हृष्टौ श्रीजिनशासनस्य प्रशंसां चक्रतुः, इति ताभ्यां जैनधर्मिमुनिपरीक्षा कृता. ॥

अथ शिवशासने वृद्धतापसपरीक्षार्थं तौ देवौ चलितौ. इतः पूर्वोक्तो जमदग्निनामा वृद्धतापसस्ताभ्यां दृष्टः, नगरलोका अपि तस्य पार्श्वे समागत्य तत्सेवां प्रत्यहं कुर्वंति; तस्य मस्तके महती जटा वर्त्तते; अथ तौ देवौ तस्य परीक्षार्थं चटकचटकीयुग्मरूपं विधाय तस्य कूर्चमध्ये आलयं कृत्वा स्थितौ. एकदा चटकेन मनुष्यनापया चटिकाप्रति कथितं, हे प्रिये! अहं हिमवतपर्वते गत्वा द्रुतमेवागमिष्यामि; तदा चटिकयोक्तं चेत्तत्रैव त्वं कयापि चटिकया सहासक्तः सन् तिष्ठेस्तदाहं किं कुर्वे! अतो नवता न तत्र गंतव्यं. तत् श्रुत्वा पुनश्चटके-

नोक्तं चेदहं पश्चान्नागच्छामि तर्हि स्त्रीहत्यागोहत्यादिपातकं मेऽस्तु, तथैव कृतघ्नविश्वासघात-
कपरनिंदकानां या गतिर्भवेत् सा मे गतिरस्तु; चटिकयोक्तमेतत्किंचिदप्यहं न मन्ये, परं
त्वं मयोक्तमेकं शपथं कुरु? यथा मम प्रत्ययो भवेत्. चटकेनोक्तं कथय? तयोक्तं चेत्त्वं प-
श्चान्नायासि तदाऽस्य महर्षेः पापं ते भवतु, इति शपथं कृत्वा त्वं याहि? तत् श्रुत्वा जम-
दग्निः क्रुद्धः सन् स्वकूर्चमध्यात्तच्चटकचटिकायुग्ममाकृष्य करे च धृत्वोवाच; अरे चटिके म-
या किं पापं कृतं? तद्वद? चटिकयोक्तं हे ऋषे? त्वमात्मनः शास्त्रं विचारय? उक्तं च—अ-
पुत्रस्य गतिर्नास्ति । स्वर्गो नैव च नैव च ॥ तस्मात्पुत्रमुखं दृष्ट्वा । पश्चाद्धर्मं समाचरेत् ॥
॥ १ ॥ तेन अपुत्रस्य गृहं शून्यमित्यादि. अतः कारणात् भो मुने त्वं क्रोधं संवर? स्वगृहं
च याहि? ऋषिणापि तद्वचो मानितं.

अथ स जमदग्नितापसो गृहे गत्वा बहुपुत्रीपितुः कोष्ठिकनगराधिपतेर्जितशत्रोर्नृपस्य
पार्श्वे समागत्यैकां कन्यां ययाच. एवं तं तापसं चलचित्तं तपोव्रताच्च भ्रष्टं विज्ञाय स मि-
थ्यात्वी देवो जैनधर्मे दृढानुरागी जातः, अथ तापसयाचनानंतरं राज्ञोक्तं मम पुत्रीशतं व-

सेते, तन्मध्याद्या त्वा वांछेत तां गृहाण! तदा स ऋषिर्नृपस्यांतःपुरे गतः, तत्र सकलाः कन्यास्तं तापसं जटिलं कुर्वलं असंस्कृतदेह मलिनांगोपांग च दृष्ट्वा तंप्रति थूत्कृतं चक्रुः, तदा कुपितेनर्षिणा ताः सर्वा अपि कन्याः कुब्जीकृताः, पश्चाद्वलितेन तेनैका नृपकन्या नृपप्रासादांगणे रममाणा दृष्टा, तस्यै निजरूपं सम्यक् प्रदर्श्य तेनोक्तं त्वं मां वांछसि? इत्युक्त्वा तस्या हस्ते बीजपूरकफलं दत्वा तामुत्पाट्य स चलितः, शापत्रयभीतेन राज्ञा सहस्रगोकुलदासदासीसहिता सा कन्या तस्मै दत्ता; पश्चात्तेनर्षिणा नृपविनयतुष्टेन तपःप्रभावात्ताः सर्वा अपि कुब्जीभूताः कन्याः समीचीनाः कृताः, एवं तेन स्वकीयं सर्वमपि तपो निष्फलीकृतं. अथ तेन सा कन्या निजाश्रमे स्थापिता, यौवनं प्राप्ता च परिणीता, रेणुकेति तस्या अभिधानं जातं, तया सह स विषयसुखानि भुनक्ति.

अथैकदा ऋतुकालसमये तस्यै जमदग्निनोक्तं हे प्रिये! अहं त्वत्प्रत्येकं वस्तु साधयित्वा दास्यामि, येन तव पुत्रोत्पत्तिर्भविष्यति, तदा रेणुकयोक्तं हे स्वामिन् युष्माभिर्मंत्रैर्द्वे वस्तुनी साधयितव्ये, यथैकेन वस्तुना क्षत्रियः पुत्रो द्वितीयेन च ब्राह्मणः पुत्रो मे भवेत्; ताप-

सेनापि तथा कृतं, तद्वस्तुद्वयं च रेणुकाग्रे मुक्तं. अथ रेणुकया तन्मध्यादेकमौषधं जग्धं, तत्प्रभावतश्च तस्या महाशूरो महाप्रतापी च रामनामा पुत्रोऽभूत. अपरं चौषधं हस्तिनागपुरे स्वभगिन्यै अनंगसेनायै प्रहितं, तया च तद्भक्षितं, तत्प्रभावेण च तस्या अपि कृतवीर्यनामा पुत्रो जातः, इतः कश्चिदेको विद्याधरोऽतीसाररोगपीडितस्तस्मिन्नाश्रमे समागतः, रामेण तस्य परिचर्या कृता, ततो जातसमाधिना तेन विद्याधरेण रामाय परशुविद्या दत्ता, तेनापि सा साधिता, तत्प्रभावाच्च तस्याग्रे कोऽपि परश्वादिशस्त्रधारी स्थातुं न शक्नोति. अथैकदा सा रेणुका निजभगिन्या अनंगसेनाया मिलनार्थं हस्तिनागपुरेऽनंतवीर्यराज्ञो गृहे समागता, तां मनोज्ञरूपां दृष्ट्वाऽनंतवीर्यः कामविह्वलो जातः, क्रमेण परस्परप्रीत्युद्भावनतोऽनंतवीर्येण सा भुक्ता. ततश्च जातगर्भाया रेणुकायास्तत्रैवैकः पुत्रो जातः, अथान्यदा तत्पुत्रयुता रेणुका जमदग्निना स्वाश्रमे समानीता. एतदकार्यतो जातक्रोधेन रामेणानंतवीर्यः परशुना हतः, तद् ज्ञात्वाऽनंतवीर्यपुत्रकीर्त्तिवीर्येण पितुर्वैरात्तदाश्रमे आगत्य जमदग्निर्हतः, तदा क्रुद्धेन परशुरामेण कीर्त्तिवीर्यं हत्वा हस्तिनागपुरस्य राज्यं गृहीतं. इतः कीर्त्तिवीर्यस्य सगर्भा

वनिता भयभीता ततो निर्गत्य वने तापसानामाश्रमे गता, तापसैरपि सा भूमिगृहे स्थापिता. तत्र तस्याश्चतुर्दशस्वप्नसूचितः सुभूमनामा पुत्रो जातः, अथ परशुरामेण भ्रांत्वा भ्रांत्वा परशुप्रभावेण क्षत्रियान् मारयित्वा सप्तवारान् निःक्षत्रिणी पृथ्वी कृता, तेषां दंष्ट्राभिश्च स्थालश्चैको भृत्वा स्थापितः ।

अथैकदा परशुरामेण नैमित्तिकः पृष्टो यन्मम मरणं कस्य हस्ताद्भविष्यतीति, तदा नैमित्तिकेनोक्तं यस्य दृष्टाविमा दंष्ट्राः क्षैरेयीरूपा भविष्यंति यश्च तां क्षैरेयीं भोक्ष्यते स पुरुषस्तव हंता भविष्यतीति, तदा परशुरामेण तं शत्रुं ज्ञातुमेका सत्रशाला स्थापिता, मुक्तश्च तत्र स क्षत्रियदंष्ट्राभृतः स्थालः सिंहासनोपरि; इतो वैताढ्यपर्वतवासिमेघनादनामविद्याधरेणैको नैमित्तिकः पृष्टो यन्मम पुत्र्याः को वरो भविष्यति? नैमित्तिकेनोक्तं सुभूमनामा चक्री तव पुत्र्या वरो भविष्यति, तदा तेन विद्याधरेण सुभूमस्य शुद्धिं कृत्वा तेन सह निजपुत्री परिणायिता, तया सह सुखं भुंजानः स तत्रैव भूमिगृहे तिष्ठति. अथैकदा प्राप्तयौवनेन तेन निजमाता पृष्टा हे मातः पृथ्वी किमेतावत्प्रमाणैव वर्त्तते? तदा मात्रोक्तं हे पुत्र!

आवां तु शत्रुभयतोऽस्मिन् तापसाश्रमे भूमिगृहमध्ये एव तिष्ठावः, परशुरामेण तत्र पितरं हत्वा हस्तिनापुरराज्यं गृहीतमस्ति. इत्यादिवृत्तांतं श्रुत्वा सुभूमः क्रुद्धः सन् भूमिगृहान्निःसृत्य निजश्वसुरं मेघनादं सार्धं गृहीत्वा हस्तिनागपुरे परशुरामकारितायां सत्रशालायां समागतः, तत्र च तस्य दृष्टिपातात्तद्दंष्ट्राभृतः स्थालः क्षैरेयीभूतः संजातः, सुभूमेन सा सर्वापि क्षैरेयी भक्षिता, तद् ज्ञात्वा परशुरामेण चिंतितं नूनं मम हंताऽयमेव, ततः परशुरामस्याज्ञया तत्सेवकास्तं हंतुं समागताः, परं मेघनादविद्याधरेण ते सर्वेऽपि पराजिताः, तद्वृत्तांतं श्रुत्वा सक्रोधः परशुरामस्तत्र समागतः, परं तत्र सुभूमं दृष्ट्वा स प्रतापरहितो जातः, इतः सुभूमेन तं स्थालमुत्पाट्य परशुरामंप्रति क्षिप्तः, तत्क्षणं चक्ररूपीभूतः स स्थालः परशुरामस्य मस्तकमलुनात्.

एवं सुभूमश्चक्री जातः, ततो वैरं स्मृत्वा तेनैकविंशतिवारान्निर्ब्राह्मणी पृथ्वी कृता. चक्रादिरत्नबलेन तेन षट्खंडानि साधितानि; तथापि तस्य लोभोदधिः परां वृद्धिं प्राप; ततोऽसौ धातकीखंडस्थभरतक्षेत्रसाधनार्थं लवणसमुद्रमध्ये सहस्रदेवाधिष्ठितचर्मरत्नोपर्यारुह्य स-

सैन्यः प्रस्थितः, इतः समुद्रमध्ये मार्गे चर्माधिष्ठायकानां मध्यादेकेन देवेन चिंतितमहं श्रांतोऽस्मि, अपरे च नवशतनवनवतिदेवा विद्यते, ततोऽहं क्षणमेतच्चर्मरत्न त्यक्त्वा विश्राम लभेयमिति विचिंत्य तेन तन्मुक्तं, भावितवशात्तेषाणा सर्वेषामपि देवाना मनस्सु स एव विचारः प्रादुर्भूतः, ततस्ते सर्वेऽपि चर्मरत्न त्यक्त्वा दूरीभूता, तेन ससैन्यः सभूमः समुद्रमध्ये पतित्वा मृत, लोभार्त्तध्यानवशाच्च सप्तम नरकं गतः ॥ इति श्रीवृहत्खरतरगच्छे पाठकश्रीसुमतिहंसशिष्यैर्वाचनाचार्यमतिवर्द्धनगणिभिः कृता सुभूमचक्रवर्तिनः कथा समाप्ता, समाप्त प्रथमोऽप प्रश्नः ॥ अथ द्वितीयप्रश्नस्योत्तर कथयति—

*गाथा*—तवसयमदाणरत्तं । पइन्न भद्दउ किवालू य ॥ गुरुवयणरत्तं निच्चं । मरिउं देवेसु सो जायइ ॥ १८ ॥ व्याख्या—हे गौतम ! यः पुमान् तपसि संयमे दाने च रक्तो भवति, पुनः प्रकृत्या भद्रक, पुनर्य कृपालुः, पुनर्गुरुवचने यो नित्य रक्त, स जीवो मृत्वा नित्य देवेषूत्पद्यते ॥ १ ॥ यथा आनंदश्रावकः, तस्य कथा चेत्थं, तथाहि—वाणिज्यग्रामे जितशत्रुराजा राज्य करोति, तत्रानंदनामैको गृहस्थो वसति, तस्य शिवानंदेति स्त्री वर्त्तते, त-

स्य गृहे सुवर्णस्य द्वादशकोटयः संति, दशसहस्रगोप्रमाणानि चत्वारि गोकुलानि वर्त्तंते, त-
द्ग्रामादीशानकोणे कोल्लाकनामा सन्निवेशोऽस्ति; तत्र च बहव आनंदस्य संबंधिनो वसंति;
अथैकदा तत्र द्रुतपलाशवने श्रीवीरः समवसृतः, तदा जितशत्रुराजा आनंदश्च तत्र प्रभुं वंदितुं
समागतौ, वंदित्वा चोचितस्थाने समुपविष्टौ, तत्र श्रीवीरस्य देशनां श्रुत्वाऽऽनंदेन श्राद्धस्य
द्वादशव्रतपूर्वकं श्रावकव्रतं गृहीतं, परिग्रहस्य चैवंविधं परिमाणं कृतं. द्वादशस्वर्णकोटयो
धनं, चत्वारि गोकुलानि, पंचशतहलानि, पंचशतशकटानि देशांतरव्यापारार्थं, पंचशतशक-
टानि गृहकार्यार्थं, मधुयष्टिदंतधावनं, शतपाकसहस्रपाकतैलेऽभ्यंगनार्थं, अन्येषां नियमः, सु-
गंधद्रव्यचूर्णमुद्वर्त्तनार्थं, अन्येषां नियमः, अष्टौ पानीयस्य लघुघटका स्नानार्थं, अन्येषां नि-
यमः, श्वेतपट्टकुलयुग्मपरिधानमन्येषां च नियमः, चंदनाऽगुरुकुंकुमकर्पूराश्च विलेपनार्थमन-
न्येषां च नियमः, अगरसेल्हारसधूपे अन्येषां च नियमः, घृतपूरखंडखर्जकानि पक्वान्नभोजने,
अन्येषां च नियमः, द्राक्षादिनिष्पन्नं पेयं कैरेयी च, अन्येषां नियमः, सुगंधकलमशालिं वि-
नाऽन्यौदनस्य नियमः, माषमुद्गकलापंविनाऽन्यधान्यस्य नियमः; शरत्कालनिष्पन्नं घृतं वि-

नाऽन्यस्य नियमः, वास्तुक मंमकिं पल्यंक विनाऽन्यशाकस्य नियम', आकाशसत्कं पानीय विनाऽन्यस्य नियम', एलालवगककोलकर्पूरजातिफलैर्मिश्रित तांबूल विनाऽन्यस्य नियमः, गृहसत्कवस्तूनिविनाऽन्येषां नियम , अन्यतीर्थिकै. परिगृहीत जिनबिंबं न नमस्करोमि. एवं द्वादशव्रतादिनियम गृहीत्वा श्रीवीरं च वंदित्वा स निजगृहे गत'; ततः शिवानंदापि श्रीवीरप्रभुसमीपे गत्वा प्रभु च वंदित्वा शुद्धभावैः श्रावकधर्मव्रत गृहीत्वा गृहे समागत्य स्वव्रत पालयति, अथैकदाऽऽनंदेनैकादशप्रतिमाराधनार्थं मनसि मनोरथ' कृत', ततस्तेन कोल्लाकग्रामे पौषधशालेका कारिता, पश्चाद्वृद्धपुत्रंप्रति निजकुटुंबभारं समर्प्य स्वजनांश्च मेलयित्वाऽन्नपानादिकं च भोजयित्वा स्वयं पौषधशालायामेकादशश्राद्धप्रतिमा अंगीचक्रे एव प्रतिमा वहन् सन् सोऽतीवदुर्बलो जात., धर्मजागरिका कुर्वतस्तस्याऽनशनस्य मनोरथो जातः, पश्चात्सलेखना कृत्वा तेनाऽनशनं गृहीत, तदा च तस्याऽवधिज्ञानं समुत्पन्न. अस्मिन् समये तत्र श्रीवीरः समवसृत', तदा श्रीगौतम. पारणार्थं तन्नगरमध्ये गत , आहारमादाय पश्चाद्वलितेन गौतमेन बहवो जना गच्छतो दृष्टा , पृष्टाश्च भो यूयं क गंतुमनसः स्थ? तैरुक्त, को-

ह्वाकग्रामे आनंदश्राद्धेनाऽवधिज्ञानं गृहीतमस्ति, तद्वंदनार्थं च वयं यामः, तत् श्रुत्वा श्रीगौतमोऽपि तं वंदापयितुं तत्र गतः, आगछंतं श्रीगौतमं दृष्ट्वाऽऽनंदो हृष्टो वंदनां कृत्वा तं पप्रछ, जो गौतम! किं गृहस्थस्याऽवधिज्ञानं समुत्पद्यते? गौतमः प्राह उत्पद्यते. आनंदेनोक्तं तर्हि मम युष्मत्प्रसादादवधिज्ञानं समुत्पन्नमस्ति, तेनाहं चतुर्दिक्षु पंचशतयोजनानि समयमध्ये पश्यामि, ऊर्ध्वं च सौधर्मं यावदधश्च प्रथमपृथ्वीलोलुचनरकावासं यावच्च पश्यामि. तदा गौतमेनोक्तं जो आनंद गृहस्थस्य ज्ञानमेतावत्प्रमाणं नोत्पद्यते, तेन त्वं मिथ्यादुष्कृतं देहि? आनंद उवाच जो गौतम! किं सत्यवादिना मिथ्यादुष्कृतं दीयते? वा असत्यवादिना? गौतम आह हे आनंद असत्यवादिनैव तावन्मिथ्यादुष्कृतं देयं. आनंदः प्राह तर्हि जवद्भिरेव मिथ्यादुष्कृतं देयं. तत् श्रुत्वा गौतमः सशंको जातः, उत्थाय च ततः श्रीवीरस्यांतिके समागतः, जक्तपानमालोच्य स्वामिनंप्रति स पृष्टवान्, हे जगवन्! आनंदः सत्यवादी किं वाऽहं? जगवतोक्तं जो गौतम! आनंद एव सत्यवादी, अतस्त्वं तत्रानंदपार्श्वे गत्वा मिथ्यादुष्कृतं देहि? तदा गौतमेनागत्य तस्मै मिथ्यादुष्कृतं दत्वा प्रोक्तं जो आनंद जगवता त्वं स-

त्पवादी प्रोक्तोऽसि, अतोऽहं ते मिथ्यादुष्कृतं ददामि मया यदा तद्विषये स्वामी पृष्टस्तदा तेनोक्तं यदानंदेनोक्तं तत्सर्वमपि स पश्यति. अथानंदोऽनशनं विधाय समाधिना स्वायुः पूर्णीकृत्य सौधर्मदेवलोकेऽरुणाजविमाने देवो जातः ॥ इति श्रीखरतर० आनंदस्य कथा स माप्ता ॥ इति द्वितीयः प्रश्न ॥ अथ तृतीयचतुर्थप्रश्नोत्तरमाह—

गाथा—कज्जेण जो सेवइ । मित्ते कज्जे कए वि संचयइ ॥ कूरो गूढमइत्तो । तिरित्तं सो होइ मरिकण ॥ १ए ॥ व्याख्या—यः पुमान् आत्मनोऽर्थे मित्रं सेवते, कार्ये सृते सति च मित्रं सत्यजति, उपलक्षणान्मित्रं दुःखयति, मित्रस्य चाऽशुभं वदति, पुनर्यः पुमान् क्रूरो जवति, तथा यो गूढमतिरर्थादात्मनो गुह्यं मित्रस्याग्रे न प्रकाशयति, स पुमान् मृत्वा तिर्यग्जवति, तिर्यक्षूत्पद्यते, यथाऽशोकदत्तकुमारो मित्रद्रोहं मायां च कृत्वा विमलवाहनस्य कुलगुरोर्हस्ती जातः ॥ १ए ॥ तथा— गाथा—अज्जवमद्दवजुत्तो । अकोहणो दोसवज्जिञ्ज दाई ॥ नयसाहुगुणेसु ठिञ्जे । मरिञ्ज सो माणुसो होइ ॥ २० ॥ व्याख्या—यः पुमान् सरलचित्तो जवति, पुनर्निरहंकारी जवति, पुनरक्रोधो जवति, पुनर्दोषवर्जितो जवति, पुनर्यः

सुपात्रे दानं ददाति, पुनर्यो न्यायवान् भवति, यश्च साधूनां गुणोत्कीर्त्तनं करोति, स जीवो मृत्वा मनुष्यो भवति, यथा सागरचंद्रकुमारः पूर्वोक्तगुणैर्युतो मृत्वा प्रथमकुलकरो विमलवाहननामा जातः ॥ १० ॥ अथ तयोः संबंधमाह—

महाविदेहे अपराजितानाम्नी नगरी वर्त्तते, तत्र चेशानचंद्रो नामा राजा राज्यं करोति, तत्रैव चंदनदासाभिधानः श्रेष्ठी वसति, तस्य पुत्रः सागरचंद्राभिधानः परमगुणवान् सरलो निर्मलाचारश्च वर्त्तते, तस्यैकं मित्रं अशोकदत्तनामासीत्, परं स मायावी कपटी च वर्त्तते, सोऽपि तत्रैव वसति. एकदा वसंतमासे राजा क्रीडार्थं वनमध्ये गतः, सर्वे नगरवासिनो लोका अप्याहूताः संतस्तत्र गताः, सागरचंद्राऽशोकदत्तौ द्वौ सुहृदावपि तत्र वने गतौ, राजा तत्र स्वपरिवारपरिवृतः क्रीडति, एवमन्येऽपि सर्वे जनाः क्रीडंति. इतः सागरचंद्रेण 'मां रक्ष रक्ष' इति कस्याप्यार्त्तशब्दो दूरतः श्रुतः, तदा स जातकृपः खड्गं गृहीत्वैकाकी तच्छब्दानुसारेण ततश्चलितः, तत्र गतेन तेन पूर्णभद्रश्रेष्ठिनः प्रियदर्शनाभिधाना कन्या चौरैरपह्रीयमाणा दृष्टा. तदा सागरचंद्रेण निजपराक्रमेण चौरेभ्यः सा मोचिता. ततः साग-

स्वगृहाय सर्वेऽपि लोका निजनिजगृहे समागताः ।

अथैकदा तस्य पित्रा चंदनदासेन सागरचंद्रायोक्तं हे पुत्र! त्वमेतस्य कुमित्रस्याऽशोकदत्तस्य संगतिं त्यज? श्रीजिनधर्मं च पालय? तत् श्रुत्वा सागरचंद्रः कथयति, भो तात! यस्मिन् कार्ये लज्जा समागच्छति तत्कार्यमहं न करिष्यामि, एवंविधेन पुत्रवचनेन पिताऽपि हृष्टः, तस्मिन्नवसरे पूर्णभद्रश्रेष्ठी निजपुत्रीरक्षणतः सागरचंद्रं निजपरमोपकारिणं विज्ञाय तस्मै तां निजां प्रियदर्शनाभिधां कन्यां ददौ, सागरचंद्रेणापि महोत्सवपूर्वकं सा परिणीता, तया सह च स विषयसुखानि भुंक्ते

अथैकदा सागरचंद्रः कार्यार्थं कस्मिंश्चिद्ग्रामे गतोऽभूत्, तावताऽशोकदत्तस्तस्य गृहे समागत्य मायां च कृत्वा भोगार्थं प्रियदर्शनाप्रति प्रार्थितवान्. तत् श्रुत्वा सकोपया प्रियदर्शनया स गृहान्निष्कासित , इतस्तावत्सागरचंद्रेऽशोकदत्त मार्गे मिलितः, तदा तेन दुष्टेनाऽशोकदत्तेन सागरचंद्रायाऽसत्यवचनेनाऽशुभं तद्गृहिणीस्वरूपं प्रोक्तं तदा सागरचंद्रेण स्वमनसि चिंतितं ध्रुवं प्रियदर्शनायामेतदकार्यं न संभवति, अयमेवाऽसत्यवक्ता. अथ सागरचं-

ड्रे निजगृहे समागतस्तदा तया स्त्रिया निजस्वामिनोऽग्रे सर्वो वृत्तांतो निवेदितः, तत् श्रुत्वा तेन विचारितं नूनमियं शीलवती सत्येव. क्रमेण चतुर्थे वयसि तौ दंपती सप्तक्षेत्रेषु धनं व्ययीकृत्य मृत्वा जंबूद्वीपस्य दाक्षिणात्ये भरते गंगासिंधुनद्योर्मध्यप्रदेशे तृतीयारकस्यांते पल्योपमस्याष्टमभागे नवशतधनुःप्रमाणदेहौ परस्परमधिकस्नेहवंतौ युगलिनौ जातौ, तत्र कल्पद्रुमास्तयोर्वांछितानि पूरयंति. अथ स मायायुतोऽशोकदत्तोऽपि मृत्वा तस्मिन्नेव वने चतुर्दंतो हस्ती तयोर्युगलिनोर्वाहनरूपो जातः, एवं मायया तस्याऽशोकदत्तस्य तिर्यक्त्वमभूत्. ॥ इति श्रीखरतर० सागरअशोकदत्तकथा समाप्ता ॥ इति तृतीयचतुर्थौ प्रश्नौ ॥ अथ पंचमषष्ठप्रश्नोत्तरमाह—

गौतमः पृछति हे भगवन्! स्त्री मृत्वा पुरुषः, पुरुषश्च मृत्वा स्त्री कथं भवति? भगवानुवाच— गाथा—संतुठ्ठा सुविणिया । अज्जवजुत्ता य जा थिरा निच्चं ॥ सच्चं जंपइ महिला । सा पुरिसो होइ मरिऊणं ॥ २१ ॥ व्याख्या—या स्त्री संतोषिणी भवति, सुविनीता भवति, सरलचित्ता च स्थिरस्वभावा भवति, पुनर्या स्त्री नित्यं सत्यं ब्रूते, सा मृ-

त्वा पुरुषो जवति; यथा नागिला मृत्वा पद्मश्रेष्ठिरूपा जाता ॥ २१ ॥ गाथा—जो चवलो सढभावो । मायाकूडेहिं वंचए सयणं ॥ न कस्स य विसत्थो । सो पुरिसो महिलिया होइ ॥ २२ ॥ व्याख्या—यः पुरुषश्चपलस्वभावः शठभाव इति मूर्खः कदाग्रही च, पुनर्मायाकूटकपटैः कृत्वा स्वजनं वंचयति, न च कस्यापि विश्वस्तोऽर्थाद्विश्वासघातकरः, स पुरुषो मृत्वा स्त्री जवति, यथा नागिलो मृत्वा पद्मश्रेष्ठिनः स्त्री पद्मिनी जाता. ॥ २२ ॥ तयोः कथानकमथ प्रोच्यते—

स्वस्तिमत्यां नगर्यां नयसारनामा राजा राज्यं करोति, तत्रैव पद्मनामा श्रेष्ठी वसति, स च सत्यवाक् संतोषवानस्ति, तस्य जार्या पद्मिन्यजिधाना वर्त्तते. सा रूपवती परं मुखे रोगयुता काहलस्वरा असत्यवादिनी मायाविनी च वर्त्तते. श्रेष्ठिना तस्या रोगापनयनार्थं बहव उपचाराः कृताः, परं तस्याः समाधिर्न जाता, तदा सा मायया निजजर्त्तारं कथयति यत्त्वं द्वितीयां स्त्रियं विवाहय? तदा श्रेष्ठी वक्ति मम मनसि संतोषो वर्त्तते, अत इमां वार्त्तां त्वं मा वद? अथैकदा स श्रेष्ठी जीर्णोद्याने देहचिंतार्थं गतः, तत्र मेघवृष्ट्या धूलीप्रक्षालन-

तो धननिधानमेकं प्रकटीभूतं, श्रेष्ठिना तद् दृष्ट्वापि न गृहीतं, तथैव तन्निधानं तत्र मुक्त्वा स स्वगृहे समायातः ।

इतस्तत्र स्थितेन केनापि राजपुरुषेण तत्सर्वं विलोक्य राजसभायामागत्य राजा विज्ञप्तः, भो महाराज! पद्मश्रेष्ठी वनमध्ये निधानं दृष्ट्वा तत्रैव च तन्निधानं स्थापयित्वा स्वगृहे समागतोऽस्ति, निशायां च स तन्निधानं स्वगृहे समानयिष्यति. तदा राज्ञोक्तं भो पुरुष त्वं तत्रैव वने याहि? सावधानतया च श्रेष्ठिनः सर्वं कृत्यं पश्य? अथ स राजपुरुषः प्रच्छन्नं तत्र स्थितः, परं निशायामपि श्रेष्ठी तस्मिन् वने न समागतः, तस्यां दिश्यपि स न समायातः, अथ प्रातः पुनरपि तेन पुरुषेणागत्य राजा विज्ञप्तः, भो स्वामिन् स श्रेष्ठी निशायामपि तत्र नागतः, तत् श्रुत्वा विस्मितेन राज्ञा तं श्रेष्ठिनमाकार्य कथितं, भो श्रेष्ठिन् गतदिवसे त्वया निधिः कथं न गृहीतः? श्रेष्ठिनोक्तं भो राजन् मम पार्श्वे संतोषाख्योऽक्षयो निधिर्वर्त्तते, तस्य तद्वचनेन रंजितेन राज्ञा तं लोभरहितं विज्ञाय नगरमध्ये महान् श्रेष्ठी संस्थापितः, एवं स सुखेन तिष्ठति. अथैकदा तत्र वने कश्चिदेकः श्रुतकेवली समवसृतः,

तस्य वंदनार्थं पद्मश्रेष्ठिसहितो राजा तत्र गतः, तं वंदित्वा च तस्माद्धर्मः श्रुतः, अथ पद्मश्रेष्ठ्युत्थाय गुरुं पृष्टवान् हे मुने! मम सतोषः केन कर्मणोत्पन्नः? तथैव मम जायापि कालस्वरा कथं सजाता? तदा गुरुस्तयोः पूर्वजन्मं कथयति—

अस्मिन्नेव नगरे केनचिन्मित्रेण निजचपलस्त्रीजयात्पुत्रमापृच्छ्य निजमित्रनागाभिधश्रेष्ठिनो गृहे तस्य पत्नीं नागिला साक्षीकृत्य निजस्वर्णस्थापनिका मुक्ता, स्वयं च धनमुपार्जयितुं देशांतरं गतः, ततो धनमुपार्ज्य पश्चादागच्छन् स मार्गे चौरैर्मारितः, तत्कलत्रपुत्राभ्यामिमां वार्तां श्रुत्वा महान् शोकः कृतः, ततः कियद्दिवसानंतरं ताभ्यां नागश्रेष्ठिसमीपे निजा स्वर्णस्थापनिका मार्गिता, तदा तेन श्रेष्ठिनोक्तं कस्य समीपे मुक्ता केन गृहीता, केन दत्ता, कः साक्षी, अहं किमपि न जानामि, तदा ताभ्यां राज्ञोऽग्रे स वृत्तांतः कथितः, राजा तं श्रेष्ठिनमाकार्य कथितवान्, भो श्रेष्ठिन् तव गृहे या एतयोः स्थापनिका मुक्तास्ति, तामेताभ्यां प्रति यच्छ? तदा तेनोक्तं न कापि मम गृहे तयोः स्थापनिका, तदा राज्ञा ताभ्यां प्रोक्तं एतद्वृत्तांतस्य कमपि साक्षिणं समानयतं? तदा तत्पुत्रेणोक्तं अस्योदंतस्य साक्षि-

एषैतद्भार्या नागिला विद्यते, तां विनाऽन्यः कोऽपि साक्षी नास्ति. तदा राज्ञा नागिलामाहूयो-
क्तं त्वं सत्यां वाणीं वद? एतत्स्थापनिका तव भर्तुः पार्श्वे मुक्तास्ति न वा? तदा नागिलया
चिंतितमथ मया किं क्रियते? इतस्तटिनी इतश्च व्याघ्रः, अथ प्रांते तया राज्ञोऽग्रे सत्यं प्रो-
क्तं, तदा राजा तस्याः सत्यवचनेन हृष्टः सन् तां वस्त्राभूषणादिभिः सन्मानयामास, तस्याः
प्रार्थनया च श्रेष्ठिनमपि मुक्तवान्. एवं नगरस्त्रीणां मध्ये नागिला सत्यवादिनी प्रसिद्धा जा-
ता. अथैकदा नागश्रेष्ठिनो गृहे मुनिरेकः समागतः, तं नागिला भक्तपानं दत्वा शुभं कर्मो-
पार्जयामास. ततः क्रमेण सा मृत्वा शुभकर्मोदयतस्त्वं पद्मनामा श्रेष्ठी जातः, नागश्रेष्ठी
च मायया मृत्वा तवेयं भार्या पद्मिनी जाता, कूटवचनजल्पनतः सा मुखरोगिणी काहल-
स्वरा च संजाता, एवं निजपूर्वभवं श्रुत्वा वैराग्यवंतौ तौ द्वावपि जातौ, दीक्षां लात्वा धर्मं
च कृत्वा गृहीतानशनौ कर्माष्टकं त्रोटयित्वा शिवं गतौ. अतोऽन्यजनैरपि मृषावचनं न व-
क्तव्यं, माया च न कर्त्तव्या ॥ इति पद्मश्रेष्ठिपद्मिन्योः कथा ॥ अथ श्रीगौतमः सप्तमं प्र-
श्नं पृच्छति—

हे भगवन् केन कर्मणा नपुंसकत्वं जायते? श्रीवीरः प्राह—गाथा—आसं वसह पसु वा । जो निलछियं इह करेइ ॥ सो सव्वगनिहीणो । नपुसत्त होइ लोगमि ॥ २१ ॥ व्याख्या—य. पुमान् अश्व तुरग वृषभं छागादिपशु वा निर्लंछनीकुरुते, अर्थात्तेषा गलकंबल छिनत्ति, तेषा श्रोत्रादि निष्कासयति, हिंसा च करोति स जीवः सर्वांगैर्हीनो भवति, नपुंसकत्वं च प्राप्नोति, यथा गोत्रासो महापातकित्वान्नपुसकत्वं प्राप्तः, तस्य गोत्रासस्य संबंधमाह—वणिक्ग्रामे मित्रप्रभो राजा राज्यं करोति, तस्य राज्ञ पट्टराज्ञी श्रीदेव्यभिधानाऽस्ति. एकदा तत्रैव ग्रामे श्रीवर्द्धमानप्रभुः समवसृत., भव्याना पुरतश्च तेन देशना विहिता, तां श्रुत्वा सकलापि पर्षत्सहर्षा संजाता. अथ देशनानतर प्रभोः प्रथमः शिष्यः श्रीगौतमः सप्तहस्तप्रमाणदेहो महालब्धिमान् षष्ठतपःपारणके प्रभोरादेश गृहीत्वा पात्रकं प्रतिलिख्य गोचर्यावसरे तस्मिन् वणिक्ग्राममध्ये प्राप्त , इतस्तेन कश्चित्पुरुषो राजपुरुषैर्वेष्टितो गाढबधनैर्नियन्त्रितो दृष्ट', तस्य हस्तौ पादौ च छेदितावास्ता, अतःकारणात् स महादुःखितश्चतुष्पथमध्ये पतित आसीत. एव तन्महापापफल ज्ञात्वा वैराग्ययुतः श्रीगौतमो भिक्षा गृहीत्वा

पश्चाद्वलित्वा श्रीवीरप्रन्नोरंतिके समागत्य ईर्यापथिकीं च प्रतिक्रम्य न्नक्तपानमालोच्य पप्र-
ह, हे न्नगवन् केन कर्मणायं पुरुषो महादुःखी संजातः? तदा श्रीवीरप्रभुराह न्नो गौतम!
त्वमेतस्य पूर्वन्नवं शृणु?

हस्तिनागपुरे सुनंदो नामा राजान्नूत्, तस्य ग्राममध्ये चैको गोवाटक आसीत्, तस्मि-
न् वाटके संध्यासमये गावः सुखेन तिष्ठंति, तस्मिन् वाटके न्नीमान्निधस्यैकस्य पुरुषस्यो-
त्पलानाम्नी न्नार्या वर्त्तते, तस्या गोत्रासनामा च पुत्रोऽस्ति, स च दुष्टधीर्निर्दयः पापी जी-
वघातकोऽस्ति. एकदा स रात्रौ लोके सुप्ते सति गृहादुत्थाय हस्तमध्ये च कार्त्रिकां गृहीत्वा
गोवाटके गत्वा गवां पुच्छकर्णनखौष्ठजीह्वादि छेदयामास. एवं स पंचशतवर्षायुः प्रपाल्य त-
न्महापातकवशान्मृत्वा द्वितीये नरके नारकी जातः, यतः—घोमावलद समारीया । कोधा
जीवविणास ॥ पुण्यविहूणो जीव ते । पामे नरकनिवास ॥ १ ॥ अथ स गोत्रासजीवो न-
रकस्य दुःखानि भुक्त्वाऽस्मिन्नगरे सुन्नद्रश्रेष्टिनो गृहे सुमित्रान्निधन्नार्यायाः कुक्षौ पुत्रत्वेनो-
त्पन्नः, सा सुमित्रा मृतवत्सत्वेन तं पुत्रं जातमात्रमुत्करे प्रक्षिप्य पुनर्गृहीत्वा तस्य पुत्रस्य

नभित इति नाम ददौ. क्रमेण च स युवा जात. ।

अथैकदा तस्य पिता सुनन्दश्रेष्ठी धनार्थं क्रयाणकैः प्रवहण भृत्वा समुद्रमध्ये चचाल. कर्मवशात्प्रायुवेगेन तत्प्रवहण भग्न, ततः सुनन्दश्रेष्ठी मृत्वा देवत्वं प्राप्त., त वृत्तांत श्रुत्वा सुमित्रा शोकसतापाकुला मृता. अथ तमुभितं पुत्र महापापिनमतीवदुराचारिणं विज्ञाय कुटुम्बिनो गृहान्निष्कासयामासुः, क्रमेण स सप्तव्यसनसेवी महाऽनर्थकारी जात , अथ तत्रैव नगरे काचिदतिशयरूपवती कामध्वजाभिधा वेश्या राज्ञोऽतीववल्लभा वर्तते, सा सर्ववेशाभाषाभिचक्षणा राज्ञश्च स्नेहपात्रमासीत्. एकदा स नभितस्तस्याः सद्मनि प्रविष्ट॰, राज्ञो जनैश्च त तत्र तथा प्रविष्ट दृष्ट्वा गृहातर्गत्वा बध्वा च त राज्ञोऽग्रे समानीय दर्शित , राज्ञ आदेशाच्च महद्विडम्बनापूर्वक स व्यापादित., एव स मृत्वा रत्नप्रभाया नारकी बभूव, नरकाच्च च्युत्वाऽऽ स नपुंसको जातोऽस्ति. अतः कारणाज्जनैर्निर्लांछनकर्म नैव कर्त्तव्य ॥ इति गोत्रासकथा, सप्तमः प्रश्नश्च अथाष्टमप्रश्नोत्तरं कथयति—

गाथा—जो मारेइ निद्दयमणो । परलोयं नेव मन्नए किंचि ॥ अइसकलेसकम्मो । अ-

प्पाऊ सो ज्ञवे पुरिसो ॥ १४ ॥ व्याख्या—यः पुरुषो निर्दयः सन् जीवान् मारयति, किंचित्परलोकं च न मन्यते, अतिसंक्लेशं करोति, स जीवो मृत्वाऽल्पायुर्न्नवति, शिवकुमारयज्ञदत्तवत् ॥ १४ ॥ तयोः संबंधमाह—उज्जयिन्यां नगर्यां समुद्रदत्तः श्रेष्टी वसति, तस्य धारिण्यन्निधा न्नार्या वर्त्तते, तस्याः पुत्र शिवकुमारनामाऽस्ति, यज्ञदत्ताज्ञिधश्चैकः कर्मकरोऽस्ति, अथैकदा स समुद्रदत्तो रोगवशान्मृतः, शिवकुमारपुत्रेण च तस्य स्वपितुर्मृत्युकार्यं कृतं. अथ कर्मवशात्सा धारिणी तेन यज्ञदत्तकर्मकरेण सह लग्ना, ततश्च लोकमध्ये तस्या महत्यवहीलना जाता, अथ शिवकुमारस्तां विरुद्धां वार्त्तां लोकेन्न्यो ज्ञात्वा निजमातरं निवारयति. तदा तया दुराचारिण्या धारिण्या रात्रावेकांते यज्ञदत्तंप्रति पुत्रस्य तच्चेष्टितं ज्ञापितं कथितं च ममायं पुत्रो यथा सूर्यः कुमुदवनं, नदीप्रवाहो निजमृत्तिकातटं, दावानलो वनं च, तथाऽयं शिवकुमारस्त्वां मां च व्यापदयिष्यति, अतः केनाप्युपायेन त्वं शिवकुमारं मारय? तदा यज्ञदत्तः कथयति हे धारिणि अयं शिवकुमारो मम स्वामी तव च पुत्रः, अतः कथं स व्यापाद्यते? एतत्प्रसादादेवाहं सुखी जातः, अतःकारणात्तस्य घातकरणोज्ञवं

जगन्निद्यं स्वामिद्रोहरूप महापातकं कथ मया क्रियते ? तदा धारिण्या पुन प्रोक्तं, भो मूढ एन शिवकुमार त्व मारयैव, तन्मृत्युत एवाऽऽवयो सुख भविष्यति," तदा यज्ञदत्तेनापि तन्मारणमगीकृतं अथैकदा धारिण्या पुत्रप्रत्येवमुक्त भो पुत्र त्वया कस्यापि विश्वासो न कर्त्तव्य , कश्चिदपि त्वा हनिष्यति, पुत्रेणोक्त हे मातर्वर अथैकदा तया दुष्टया पुत्रप्रति कथितं हे पुत्र गोपालोऽस्मद्गोवर्ग समीचीनं न चारयति न च रक्षति, अतस्त्व गोवर्ग चारय ? अद्य त्व करे शस्त्र गृहीत्वा गोपालेन सह वन याहि ? यज्ञदत्तमपि सार्थे गृह्णीयाः, एव मातुराज्ञया स शिवकुमारो गोपालसमीपे गत्वा सर्व वृत्तात तस्मै निवेदयित्वा कथयामास, यत्त्वयाऽहमस्माद्रक्षणीय, अथ गोपालेन तत्र द्वे शय्ये विहिते, तयोरुपरि संध्यायामागत्य द्वावपि सुप्तौ, घटिकानतर शिवकुमारो निजशय्या वस्त्रेणाच्छाद्योत्थाय च गवा समूहमध्ये गत्वा स्थित, तदनतर यज्ञदत्त प्रच्छन्नतया निजशय्याया उत्थाय शिवकुमारस्य शय्योपरि खड्गप्रहार दत्तवान्, तदा शिवकुमारस्तत्रागत्य यज्ञदत्तं खड्गेन व्यापादितवान्. तत. शिवकुमारेण चौर चौर इति मुखेनोक्त्वा कथित चौरेणायं यज्ञदत्तो मारित इति.

अथ प्रातर्यदा यज्ञदत्तो निजगृहे समायातस्तदा तन्मात्रा पृष्टं रे पुत्र! यज्ञदत्तः क्वा- स्ति? कथं स नाऽऽयातः? पुत्रेणोक्तं स मम पृष्ठे समायाति; अथ शिवकुमारो निजमनसि चिंतयति अहो! कर्मविपाकः कीदृशोऽस्ति! मातापि स्वार्थवशतो निजपुत्रं मारयितुमिच्छ- ति. अथ यदा रात्रौ स निद्रालुर्जातस्तदा तन्मात्रा तस्य खड्गो निष्कास्य दृष्टः, तं रुधिरलि- प्तं दृष्ट्वा तया चिंतितं नूनमनेन यज्ञदत्तो मारितः, अत एनं मारयामीति विचिंत्य तया ते- नैव खड्गेन निजपुत्रो हतः, स वृत्तांतस्तत्रस्थया शिवकुमारधात्र्या दृष्टः, तदा क्रोधातुरया तया मुशलेन धारिणी हता, धारिण्यापि च सा चपेटया हता, एवं ते चत्वारोऽपि जीवा नि- र्दयत्वान्महापातकयोगान्मृत्वा दुःखिनः संतोऽल्पायुष्का जाताः परस्मिन् भवे. अतो भव्य- जीवैर्जीववधो नैव कार्यः ॥ इति श्रीगौतमपृच्छायामष्टमः प्रश्नः ॥ अथ नवमप्रश्नोत्तरमाह—

गाथा—मारेइ जो न जीवे । दयावरो अभयदानसंतुट्ठो ॥ दीहाऊ सो पुरिसो । गोय- म भणिउ न संदेहो ॥ १९ ॥ व्याख्या—यो जीवान्न मारयति यश्च दयावान् भवति, पुन- र्योऽभयदानं दत्वा संतुष्टो भवति, स जीवो मृत्वा परभवे संपूर्णायुर्भवेत्; हे गौतम! तद्वि-

पये त्वं संदेहं मा कुरु ॥ २५ ॥ एवंविधः पुरुषो दामनकवद्दीर्घायुर्भवति तद्यथा—राजगृहनगरे जितशत्रुनामा राजा राजते, तस्य जयश्रीनाम्नी राज्ञी विद्यते, तत्र मणिकारः श्रेष्ठी, तस्य च सुयशानाम्नी पत्नी तयोः पुत्रो दामनकाख्योऽभूत् स यदाष्टवार्षिको जातस्तदा तस्य पितरौ मृतौ, दारिद्र्यभावात्स दामनको नगरमध्ये धनिनां गृहेषु भिक्षावृत्तिं करोति, अथैकदा द्वौ मुनी सागरपोताख्यव्यवहारिश्रेष्ठिनो गृहे आहारार्थं प्रविष्टौ, आहारं च गृहीत्वा यदा तौ बहिः समागतौ, तदा ताभ्यां स भिक्षाचरो बालकस्तस्य द्वारि स्थितो दृष्टः, तं दृष्ट्वैकेन मुनिनोक्तं द्वितीयं मुनिंप्रति, भो मुने ! नूनमयं बालोऽस्य गृहस्य स्वामी भविष्यति अथ गवाक्षस्थितेन गृहस्वामिना श्रेष्ठिना तत्सर्वमाकर्णितं, तेन च स वज्राहत इव संजातः, चिंतितं च तेन अहो मयाऽनेकैः कष्टैर्मायाबीभूयाऽयं वित्तं उपार्जितोऽस्ति, तस्य वित्तस्य चायं रंकः स्वामी भविष्यति, गुरुवचनमप्यन्यथा नैव भवेत्, अत एनं शिशुं केनाप्युपायेनाहं मारयामि तदा वरं

इति विचार्य स सागरपोतः श्रेष्ठी तं मुग्धं बालकं मोदकादिभिः प्रलोभ्य चाण्डालपा-

टके पिंगलाख्यचांडालस्य गृहे मुक्तवान्. पश्चात्स स्वयमपि तस्य चांडालस्य गृहे गतः, तत्र गत्वा तेन तं चांडालंप्रत्युक्तमहं तुभ्यं मुद्रापंचकं दास्ये, त्वमेनं शिशुं शीघ्रं हत्वा मां दर्शयेः? इत्युक्त्वा स निजगृहं गतः, अथ स मातंगस्तं बालकं सुरूपं वीक्ष्य करुणापरोऽभूत्. ततोऽसौ चिंतयामास यदनेन शिशुनापि सागरपोतस्य कोऽपराधः कृतो भविष्यति? इत्यतोऽभतो मयापीदृक् कर्म नोचितं कर्तुं, अतो मयाऽस्मै बालाय जीवितदानमेव देयं. इति विचार्य स चांडालः कर्त्रिकया तस्य शिशोः कनिष्ठांगुलीं छित्वा तंप्रत्युवाच भो बाल अथ त्वमितो द्रुतं पलायस्व यदि जीवितं वांछसि, अन्यथा त्वामनया कर्त्रिकयाऽहं व्यापादयिष्यामि. तत् श्रुत्वा वाताहतद्रुम इव कंपमानांगः स ततः पलाय्य यस्मिन् ग्रामे सागरपोतस्य गोकुलमभूत् तत्र गतः, तत्र नंदाभिधानेनाऽपुत्रकेन गोकुलस्वामिना स पुत्रतया स्थापितः.

अथ स चांडालस्तस्य कनिष्ठांगुलीं गृहीत्वा सागरपोतस्य पार्श्वे समागत्य तं तदभिज्ञानं दर्शितवान्. तद् दृष्ट्वा सागरोऽपि स्वमनसि सहर्षो जातः, चिंतितवांश्च मया मुनेर्वाक्यं विफलीकृतं; एवं स सागरपोतः सुखेन तिष्ठति. अथान्यदा स निजगोकुले गतः, तत्र

नदगृहे छिन्नांगुलिकं तं दामनकं यौवनस्थं दृष्ट्वा स विषण्णो जातः, नंदं च पप्रच्छ, अयं तव पुत्रः कदा जातः? कुतो वा त्वया समुपलब्धः? सत्यं ब्रूहि तदा नंदेन कथितं अस्य बालकस्य कनिष्ठागुली केनचित्कारणेन चाण्डालेन छेदिता, तद्भयात्पलाय्य सोऽत्र मदीये गृहे समागतोऽस्ति, मया च स पुत्रत्वेन रक्षितोऽस्ति तत् श्रुत्वा सागरपोतेन विचारितं नूनं मुनेर्वचः सत्यं जातं, इति विचार्य चिंतातुरः श्रेष्ठी स्वपुरप्रति चलितुं प्रवृत्तः, तदा नंदेन कथितं भो श्रेष्ठिन्नधुनैव भवतामत्रागमनं जातं, तत शीघ्रं पश्चात्कथं प्रस्थानं क्रियते? किं किंचिद्गृहकार्यं त्वया विस्मृतमस्ति? तदा श्रेष्ठिनोक्तं ममैकं महद्गृहकार्यं स्मृतिपथमागतं ततोऽहं शीघ्रं गच्छामि, तदा नंदो जगाद, चेद्भवता किंचिन्महत् शीघ्रं च करणीयं कार्यं भवेत्, तर्हि लेखं लिखित्वा ममास्य पुत्रस्य समर्पय? स शीघ्रमेवेतो गत्वा तं लेखं भवत्पुत्राय तत्र समर्पयिष्यति, श्रेष्ठिनेऽपि तदुचितं, अतोऽसौ लेखमेकं लिखित्वा दामनकाय ददौ, सोऽपि तं लेखं गृहीत्वा द्रुतं राजगृहनगरसमीपे समागतः,

अथ तस्मिन् लेखे तेन दुष्टेन पापिष्टेन श्रेष्ठिना स्वपुत्रंप्रतीति लिखितमासीत्, यदस्य

लेखस्य समर्पयितारंप्रति त्वया निःशंकमनसा विषं देयं, तस्मिन् कार्ये ममाज्ञास्ति. अथ दामनकस्तं लेखं गृहीत्वा नगरसमीपे समागत्य विश्रामहेतोरुद्यानस्थस्मरदेवकुले स्थितः, मार्गश्रमतश्च तस्य तत्र निद्रा समागता. इतस्तस्य सागरपोतश्रेष्ठिनो विषाभिधाना पुत्री वरार्थिनी स्मरदेवं पूजयितुं तत्र समागता; स्मरदेवं च प्रपूज्य यौवनावस्थाप्रादुर्भावितः सा देवंप्रति वरं ययाचे. इतस्तया तत्र निद्रितदामनकस्य पार्श्वे निजपितृमुद्रांकितो लेखो दृष्टः, दृस्तलाघवात्तया च स गृहीतः, तत्र लिखितं चोदंतं विज्ञाय तया चिंतितं, अहो मनोज्ञरूपो युवायं वर्त्तते, ममापि मानसमस्योपर्यैव मोदते, अतोऽस्य युनो विषदानतो मारणमयोग्यमेव. इति विचार्य तया कज्जलसलाकया विषशब्दोपरिस्थं बिंदुं विलुप्य तस्य स्थाने विषा इत्यकरोत्. पुनस्तं लेखं मुद्रयित्वा दामनकस्य पटांचले सा वबंध. ततः स्वयं च निजगृहे समागता, इतो घटिकानंतरं दामनकः प्रबुद्धः शीघ्रं नगरमध्ये समागत्य तं लेखं श्रेष्ठिपुत्राय समुद्रदत्ताय दत्तवान्. समुद्रदत्तेन लेखं वाचयित्वा विचारितं, यत्पित्रा लिखितमस्ति अस्मै विषा प्रदीयतां, तस्मिन् विषये कोऽपि संदेहो न कार्यः, अतो मयापि तदाज्ञानुसारेणैव

कर्तव्य, इति विचार्य तेन तयोः शीघ्रमेव विवाहोत्सवो विहितः, अथ विवाहाद् दिनद्वयानंतर सागरपोतकगेहे सा वार्ता गोकुलमध्ये एव जनमुखात् समागता, तेन सोऽतीवविषण्णः सन् ततो नगरप्रति प्रस्थितः, मार्गे स मनसि चिंतयति, मया यत्किंचिद्विधीयते तत्सर्वं विधिस्त्वन्यथा करोति, नूनमयं मत्पुत्रजामाता जातः, तथाप्यहं पुनरेनं व्यापादयामीति चिंतयन् स दुरात्मा पिंगलनाम्नस्तस्य मातंगस्य गृहे समागत्य तमुवाच, अरे! चाण्डाल! स त्वया कथं न मारितः? सत्यं वद? चाण्डालेनोक्तं भो श्रेष्ठिन् तदा दयापरिणामवशतो मया स न व्यापादितः, अथ पुनस्तं बालं मम दर्शय, यथा तं मारयित्वा तव मनोरथं सफलीकरोमि, अथ श्रेष्ठिनोक्तं भो पिंगल! प्रभाते तं दामनकं संध्याकाले मम गोत्रदेव्या आयतने प्रेषयिष्ये, तदा त्वया तत्र स हन्तव्यः, अथ संध्यासमये श्रेष्ठी गृहे समागत्य तौ वधूवरौ प्रतीदमब्रवीत्, अरे युवाभ्यामद्यापि किं कुलदेव्याः पूजनं न कृतं? यत्प्रसादादयं भवतोः संगमो जातोऽस्ति, इत्युक्त्वा पुष्पादिपूजनसाजनयुतौ तौ दंपती संध्यासमये पूजार्थं गोत्रदेव्या आयतने स मुमोच.

एवं तौ संध्याकाले पूजार्थं गोत्रदेवीमंदिरे गच्छंतौ दृष्ट्वा हट्टस्थितश्रेष्टिपुत्रः समुद्रदत्त उ-
त्थाय तौ प्रत्युक्तवान्, अत्र संध्यासमये पूजावसरो नास्ति, इत्युक्त्वा तावेकांते तत्र चतुष्प-
थे संस्थाप्य स्वयं च तत्पुष्पादि गृहीत्वा देव्यालये प्राविशत्, तदा संकेततस्तत्रागतेन पिंग-
लचांमालेन ज्ञातं यत्स एव पुरुषः समागतः, इति विचार्य तेन स श्रेष्टिपुत्रः समुद्रदत्तः ख-
ड्गेन व्यापादितः, चिंतितं चाद्य मया श्रेष्टिनो मनोवांछितं कार्यं विहितं. अथ क्रमेण तत्र हा-
हारवो जातः, सागरपोतो निजपुत्रमरणं विज्ञाय वक्षःस्फोटनेन पुत्रवियोगदुःखितो मृत्युमा-
प. अथ कुटुंबिभिर्मिलित्वा स दामनकस्तस्य श्रेष्टिनो गृहादिसर्वधनस्य प्रभुश्चक्रे, अथ स
दामनको यौवनेऽपि धर्मं चकार परं विषयेषु वांछां न व्यधात्; एकदा तेन कस्यचित्साधोर-
ग्रे धर्मदेशना श्रुता, देशनाश्रवणानंतरं दामनकेन पृष्टं हे भगवन् कृपां विधाय यूयं मम पू-
र्वभवं कथयत? मुनिनोक्तं भो दामनक! शृणु?

अस्मिन्नेव भरतक्षेत्रे गजपुरनगरे सुनंदाख्य एकः कुलपुत्रोऽभूत्, तस्य जिनदासाख्यः
सुहृद्बभूव. एकदा तौ उद्याने गतौ, तत्रस्थं कंचनाचार्यं निरीक्ष्य सुनंदो मित्रसहितस्तदंति-

के समागत्य स्थितः, आचार्येण देशना दत्ता, देशनामध्ये आचार्येण कथितं यो मनुष्यो मांसं भक्षयति स बहुदुःखभाग्नरकगामी च भवति इति श्रुत्वा स जातसंवेगो मांसभक्षणस्य शपथं जग्राह, जीवरक्षायां च तत्परोऽभूत्, तदादितः स कदापि जीवहिंसां नाऽकरोत् अथ कियत्कालानंतरं तत्र कल्पांतकालोपमो दुष्कालः पतितः, सर्वे जनाश्च मांसभक्षणतत्परा जाताः, तदा सुनंदस्य भार्या तम्प्रति कथयति, हे स्वामिन् त्वमपि नद्यास्तीरे याहि? तत्र च नदीमध्ये जालं विस्तार्य मत्स्यान् गृहीत्वानय? येनास्मत्कुटुंबस्य पोषणं भवेत्.

इति तयोक्तोऽसावुवाच हे प्रिये इदं कार्यं कदाप्यहं न करोमि, अस्मिन् कार्ये महाहिंसा भवति, तदा तद्भार्ययोक्तं नूनं त्वं कैश्चिन्मुंडकैर्वंचितोऽसि, अतस्त्वं द्रुतं याहि? एवं भार्यया बहुशो निर्भर्त्सनात्सुनंदो ह्रदे मत्स्यान् निष्कासयितुं गतः, तत्राऽगाधे जले च जालं चिक्षेप तत्र जालमध्ये पतितान् मीनान् दुःखाकुलान् वीक्ष्याऽनुकंपया स तान् पुनर्जलमध्येऽमुचत् दिनद्वयावधि तेनैवमेव कृतं, तृतीयदिनेऽप्येवं कुर्वतः एकस्य मीनस्य पक्षिका त्रुटिता, तद् दृष्ट्वा सुनंदोऽतीवशोकार्तो जातः, स्वगृहे समागत्य च स्वजनान् प्रति जगाद,

अहं कदाचिदपि नरकनिबंधनरूपां जीवहिंसां न करिष्यामि, एवमुक्त्वा स गृहान्निर्गतः, एवं
कियत्कालं यावत्तन्नियमं प्रपाल्य ततो मृत्वाऽयं त्वं दामनको जातः, मत्स्यपक्षत्रोटनकर्मो-
दयत इह भवे तवैकांगुलिका त्रुटिता, एवं गुरुभ्यो निजपूर्वभवं श्रुत्वा सुनंदः संवेगतोऽनश-
नं विधाय समाधिना च स्वायुः प्रपाल्य मृत्वा सुरवरो बभूव, ततश्च्युत्वा मर्त्यभवं प्राप्य
जैनीं दीक्षां च प्रपद्य क्रमात्स मोक्षं यास्यति ॥ इति जीवदयादानविषये दामनककथा संपू-
र्णा. ॥ अथ दशमैकादशप्रश्नोत्तरमाह—

गाथा—देइ न निययं सम्मं । दिन्नं पि निवारए दित्तं ॥ एएहिं कम्मेहिं । भोगेहिं वि-
वज्जिओ होइ ॥ २६ ॥ व्याख्या—यः पुरुष आत्मनो वस्तु कस्मैचिन्न ददाति, पुनः कस्मैचि-
द्दत्तं वस्तु पश्चाद्गृह्णाति, पुनरन्येभ्यो दानदायकान्निवारयति, ईदृशेन कर्मणा जीवो भोगरहि-
तो भवति. धनसारवत् ॥ २६ ॥ गाथा—सयणासणवत्थं वा । भत्तं पत्तं च पाणयं वा-
वि ॥ हीयेण देइ तुठो । गोयम भोगी नरो होइ ॥ २७ ॥ व्याख्या—यः पुरुषः शयनास-
नवस्त्राणि पट्टिकासंस्तारकपादपुंछनकंबलादीनि, पुनर्भक्तं पात्रं पानीयं च साधुभ्यो हृदये हृ-

र्पं धृणा ददाति, स जीवो दे गौनम भोगवान् सुखभाग्भवति, धनसारवत् ॥ २७ ॥ अ-त्र धनसारकथामाह—मधुराया नगर्यां धनसारनामा श्रेष्ठी वसति, स षट्पष्टिकोटीनामधिपतिः, परं महाकृपणो धर्मे व्ययं न करोति, गृहद्वारि समागतं भिक्षाचरं दृष्ट्वेर्ष्यां करोति, यः कश्चिन्मार्गयति तस्मै एव स कुप्यति, याचकं दृष्ट्वा दूरे भवति, प्राघूर्णकमप्यागतं दृष्ट्वा स्वयं पलायनं करोति कोऽपि जनः प्रभाते तस्य नामापि न गृह्णाति

अथैकदा तस्य वर्धापनिकात्रयमित्थमागतं, निधानगता द्वाविंशतिस्वर्णकोटयोंगाररूपाः संजाता, द्वाविंशतिकोटिभृत्प्रवहणं च भग्नं, द्वाविंशतिकोटिभृतानि शकटानि च मार्गे चौरैर्गृहीतानि एवंविधं वृत्तांतं श्रुत्वा स धनसारोऽचेतनः शून्यहृदयो जातो भूमौ च पतितः, पश्चाज्जनैः स सचेतनीकृतः, परं शून्यमनाः सन् चतुष्पथे भ्रमति, लोकास्तस्य हास्यं कुर्वंति, कियद्दिवसानंतरं स दशलक्षभाटकेन प्रवहणं गृहीत्वा समुद्रमध्ये चलितः, कर्मवशात्प्रवहणं भग्नं, परं तेन पट्टकमेकं लब्धं, तस्य सहायेन स समुद्रं तरित्वा तटे समागतः, अथ तत्रस्थः स एवं चिंतयति, मया सुपात्रे दानं न दत्तं, तथाऽन्यपार्श्वान्न दापितं, अत एव मम



लक्ष्मीर्गता, लक्ष्म्यास्त्रयो गतयः संति, यथा—दानं जोगो नाश इति. मल्लक्ष्म्यास्त्वेकैव गतिर्जाता. इतस्तत्र वने केवलिनं समवसृतं विज्ञाय स तं वंदितुं गतः, तं वंदित्वा श्रेष्ठी केवलिनं गुरुंप्रति पृछति, हे जगवन् अहं केन कर्मणैवंविधः कृपणो जातः? मम लक्ष्मीश्च कथं गता? तदा गुरुः कथयति जो धनसार! त्वं शृणु? धातकीखंमे जरतक्षेत्रे द्वौ ज्रातरौ महर्द्धिमंतावास्तां, तयोर्यो वृद्धभ्राता स उदारचित्तो गंजीरः सदा दानमतिश्च बजूव. द्वितीयज्राता च रौद्ररूपो महाकृपणश्चासीत्. अथ वृद्धज्रात्रा स लघुज्राता जिन्नः कृतः, दानमाहात्म्यतो वृद्धभ्रातुर्लक्ष्मीर्वर्द्धते, लघुभ्रातुश्च कृपणस्वजावतो लक्ष्मीस्त्रुटति. तद् दुःखेन दुःखितो लघुज्राता वृद्धज्रात्रा सह कलहं करोति. तदा स वृद्धज्राता वैराग्याद्दीक्षां गृहीत्वा तपसा च कतिचित्कर्मक्षयं विधाय स्वायुःप्रांते सौधर्मे सुरोऽजूत्, लघुज्रातापयज्ञानतपः कृत्वाऽसुरकुमारो जातः, ततश्च्युत्वा स लघुज्रातृजीवस्त्वं धनसारोऽयं जातः, वृद्धज्रातुर्जीवश्च देवलोकाच्च्युत्वा ताम्रलिप्त्यां नगर्यां कस्यचिद्व्यवहारिगृहे पुत्रीजूय, पश्चाद्दीक्षां गृहीत्वा कर्मक्षयं च विधायायमहं केवल्यजूवं, एवं पूर्वजवस्याहं तव ज्रातास्मि; त्वया तदा दानं न दत्तं, अंतरायकर्म च ब-

र्य धृत्या ददाति, स जीवो हे गौतम! भोगवान् सुखभाग्भवति, धनसारवत् ॥ २७ ॥ अ-
त्र धनसारकथामाह—मथुरायां नगर्यां धनसारनामा श्रेष्ठी वसति, स षट्पष्टिकोटीनामधि-
पतिः, परं महाकृपणो धर्मे व्ययं न करोति, गृहद्वारि समागतं भिक्षाचरं दृष्ट्वेर्ष्यां करोति,
यः कश्चिन्मार्गयति तस्मै एव स कुप्यति, याचकं दृष्ट्वा दूरे भवति, प्राघूर्णकमप्यागतं दृष्ट्वा
स्वयं पलायनं करोति कोऽपि जनः प्रभाते तस्य नामापि न गृह्णाति

अथैकदा तस्य वर्धापनिकात्रयमिह्मागतं, निधानगता द्वाविंशतिस्वर्णकोटयोंगाररूपाः
संजाताः, द्वाविंशतिकोटिभृत्प्रवहणं च भग्नं, द्वाविंशतिकोटिभृतानि शकटानि च मार्गे चौ-
रैर्गृहीतानि एवंविधं वृत्तांतं श्रुत्वा स धनसारोऽचेतनः शून्यहृदयो जातो भूमौ च पतितः,
पश्चाज्जनैः स सचेतनीकृतः, परं शून्यमनाः सन् चतुष्पथे भ्रमति, लोकास्तस्य हास्यं कुर्व-
न्ति, कियद्दिवसानंतरं स दशलक्षनाटकेन प्रवहणं गृहीत्वा समुद्रमध्ये चलितः, कर्मवशात्प्र-
वहणं भग्नं, परं तेन पट्टकमेकं लब्धं, तस्य सहायेन स समुद्रं तरित्वा तटे समागतः, अथ
तत्रस्थः स एवं चिंतयति, मया सुपात्रे दानं न दत्तं, तथाऽन्यपार्श्वान्न दापितं, अत एव मम

दशमप्रश्नोत्तरमाह—

गाथा—गुरुदेवय साहूणं । विणयपरो संतदंसणीत्त य ॥ न नणेइ किंपि कडुयं । सो पुरिसो जायए सुहित्त ॥ ३८ ॥ व्याख्या—यः पुरुषो गुरूणां देवानां साधूनां च विनयं करोति, धर्मनिंदादि किमपि कटु वचनं न ब्रूते, एवं विधः सज्जनानां दर्शनीयः स पुरुषः सुखी नवति, सर्वजनवल्लनश्च जायते. राजदेववत्. ॥ ३८ ॥ गाथा—अगुणोवि गव्वित्त-नि य । निंदइ धीरे तवस्सिणो कामी ॥ माणी विरूंवत्त जो । सो जायइ डुही पुरिसो ॥ ॥ ३९ ॥ व्याख्या—यः पुमान् निर्गुणी अहंकारी च नवति, पुनर्यो गुणवतां तपस्विनां च निंदां करोति, पुनर्यः कामी नवति, पुनर्यो जात्यादिमदं करोति, तथाऽन्येषां विरूंबनां च करोति स जीवो मृत्वा डुःखी नवति ॥ ३९ ॥ अत्र राजदेवनोजदेवयोः संबंधमाह—

यथाऽयोध्यायां नगर्यां सोमचंद्रो राजा राज्यं पालयति, तत्र च देवपालान्निधः श्रेष्ठी वसति, तस्य देवदिन्ना नाम्नी नार्या वर्त्तते, तस्या राजदेवनोजदेवान्निधौ द्वौ पुत्रौ जातौ. तयोर्वृद्धन्नाता राजदेवः सर्वजनानां वल्लनो महासौनाग्यवांश्च बनूव, यदासावष्टवार्षिको जा-

दं, तदुदयतस्तव धन गतं, इति श्रुत्वा धनसारेण गुरोः समीपे इति नियमो गृहितो यद्यमज्जृत्यद लाज्राच्चतुर्थांश धर्ममार्गे वितरिष्यामि, एवं तेन यावज्जीवं नियमो लब्धः, अथ स श्रावकधर्ममगीकृत्य तामलिप्त्या च समागत्य व्यवसायं करोति, क्रमेण तस्य वृद्धी लक्ष्मीर्जाता. अथ स सुपात्रे दान ददाति पर्वतिथौ च पौषधव्रतं गृह्णाति

अथैकदा स पौषधं गृहीत्वा कायोत्सर्गेण कस्मिंश्चिच्छून्यगृहे स्थितः, तत्र केनचिद्व्यंतरेण सर्परूप विधाय स दशितः, परमसौ न क्षुब्ध , ततः संतुष्टेन व्यतरेणोक्तं हे श्रेष्ठिन् त्व पुनर्मधुगया याहि? त्वया यद्धनं निधाने स्थापितमस्ति तद्धनं तत्र तथैव विद्यते, अतस्त्वया तन्निष्कासनीयं, एवमुक्तः स तत्र गत्वा निजधन स्वाधीनं चक्रे, क्रमेण च स पुनः षट्‌कोटीना स्वामी जात , अथ स सप्तक्षेत्रेषु धन व्ययति, तेन तत्र नवीन जिनमंदिर कारापित, एव सोऽस्मिन्नेव भवे पुण्यप्रभावात्सुखीजात , पश्चात्पुत्रप्रति गृहभार दत्वा स्वय चाऽनशन विधाय सौधर्मे देवलोकेऽरुणाभविमाने स चतुःपल्योपमायुर्देवो जातः, ततश्च्युत्वा स महाविदेहे मोक्ष प्राप्स्यति. ॥ इति धनसारश्रेष्ठिकथा संपूर्णा ॥ अथ द्वादशमत्रयो-

थ द्वितीयो मानधरो निर्गुणः सन् तपस्विनां धर्मवतां च निंदाकारी हास्यकारी च संजातः, एकदा वर्षाकाले एकं मासोपवासिनं मुनिं दृष्ट्वा स मानधरस्तस्य निंदां कृतवान्, यथायं मायावी मुनिर्लोकान् वंचयितुं केवलं यशोऽर्थमेव तपः करोति, नूनमयं पाखंडी वर्त्तते. तदा तत्साधुसेवाकारक एको देवस्तत्रागत्य तंप्रति कथयति भो मानधर त्वं साधोर्निंदां मा कुरु? एवं तेन निवारितोऽपि स निजकुचेष्टां न त्यक्तवान्. तदा देवेन चपेटया हतो मृत्वा प्रथमे नरके स नारकी जातः, ततो नरकान्निःसृत्यायं तव भोजदेवाभिधः पुत्रो जातः, एवं साधूनां निंदाकरणात् स दौर्भाग्यवान् जातोऽस्ति. अथ तौ द्वावप्येवंविधां गुरुवाणीं श्रुत्वा जातिस्मरणं प्राप्तौ. भोजदेवो निजपूर्वभवं दृष्ट्वात्मनो निंदां कृतवान्. ततस्ते त्रयोऽपि केवलिनः पार्श्वे श्राद्धधर्मं स्वीचक्रुः, कालांतरे तौ द्वावपि दीक्षां गृहीत्वा मृत्वा च देवलोके गतौ, तृतीयभवे च मोक्षं यास्यतः, यतः—गुण बोले निंदे नहि । ते सोभागी होय ॥ अवगुण बोले परतणा । ते डुर्भागी होय ॥ १ ॥ अतः कारणात्कस्यापि निंदा न कार्या. इति राजदेवभोजदेवयोः कथा समाप्ता. ॥ अथ चतुर्दशमपंचदशमप्रश्नोत्तरमाह—

तस्तदा तेन सकला अपि कला. शिक्षिताः, यौवने च स पित्रा स्वयवरां कन्यांप्रति परिणायित, स दृष्टे व्यवसायं कुर्वन् बहुतर लाभमधिगच्छति, राज्ञोऽपि सोऽतीवमाननीयोऽभूत्. अथ द्वितीयो भोजदेवश्च जन्मत आरभ्य दौर्भाग्यवान् निष्कलश्च जात., यदा स यौवनवय प्राप्तस्तदा तस्यार्थे पित्रा बह्व्योऽपि कन्या मार्गिता., पर कोऽपि तस्मै कन्या न ददाति तदा पित्रा कस्मैचित् दरिद्रिणे दिनारपंचशत दत्वा तस्य पार्श्वे स्वपुत्रकृते तत्कन्या मार्गिता, पर सा कन्योवाच, अहमग्नौ प्रविशामि परमेन पुरुषं वरं न करिष्यामि, यतोऽसौ कूटव्यवसायान्न किंचिल्लाभमधिगच्छति. इतः कश्चिद् ज्ञानी गुरुस्तत्र समागत., पुत्राभ्यां सहितः श्रेष्ठी त वदितुं वने गत., तत्र देशनाश्रवणानतरं श्रेष्ठी गुरु पृच्छति, हे भगवन् ममाप्यमेरः पुत्र. सौभाग्यवान् द्वितीयश्च दौर्भाग्यवान् केन कर्मणा जातः? गुरु कथयति हे श्रेष्ठिन्! जीवेन कृतं शुभाशुभ कर्म अभुक्तं न प्रयाति.

अस्मिन्नेव नगरेऽस्माद्भवात्तृतीयभवे गुणवरमानधराभिधौ द्वौ वणिकपुत्रावभूतां. तयोर्गुणधरो देवगुरुसाधूना विनये सावधान उपशातकोपश्चाभूत्, कदापि स दुर्वचनं न ब्रूते. अ-

यस्तु निष्कलो विद्यारहितो महामूर्खो बभूव; लोकैरपि तन्नाम दुर्बुद्धिरिति विहितं. तत्र नगरे धनाभिधश्चैकः श्रेष्टी वसति, तस्य चत्वारः पुत्राः संति, एको जावडः, द्वितीयो भावडः, तृतीयो वाहडः, चतुर्थश्च मावडः, एवं ते चत्वारोऽपि परिणायिताः संतः सुखेन तिष्टंति. अथ कियत्कालानंतरं स धनश्रेष्टी रोगग्रस्तो जातः, तदा तेन तान् पुत्रानाकार्य शिक्षा दत्ता, यथा भो पुत्रा युष्माभिः परस्परं भिन्नत्वं न विधेयं, एकस्थाने एव स्थातव्यं, तथा कदाचिद्भवतां पृथक्त्वं जायते तथापि कलहो न कर्त्तव्यः, पुत्रैरपि पितुर्वचनं तथेति प्रतिपन्नं. मया युष्माकं चतुर्णामपि पुत्राणां कृते चत्वारि निधानानि गृहस्य चतुःकोणकेषु क्षिप्तानि संति, तानि युष्माभिर्गृहितव्यानि. इत्युक्त्वा स धनश्रेष्टी समाधिना मृतः, अथ तैश्चतुर्भिर्भ्रातृभिर्मिलित्वा तानि निधानानि निष्कासितानि. तत्र वृद्धभ्रातुः केशनिधानं, द्वितीयस्य मृत्तिकानिधानं, तृतीयस्य कज्जलनिधानं, चतुर्थस्य च स्वर्णरत्ननिधानं निःसृतं. तदा चतुर्थः पुत्रो निजनिधानं दृष्ट्वाऽतीवहृष्टो बभूव. अन्ये त्रयोऽपि भ्रातरः क्लेशं कर्त्तुं लग्नाः, तदा लघुभ्रात्रा प्रोक्तं भो भ्रातरः पित्रा यद्यद्वस्तु यस्य यस्य दत्तं, तत्तदेव तेन ग्राह्यं, तद्विषये मनस्यन्यथा नै-

गाथा—जो पढइ चिंतइ सुणे । अन्नं पाढेइ देइ उवएस ॥ सुयगुरुज्ञत्तिजुत्तो । मरिउं सो होइ मेहावी ॥ ३० ॥ व्याख्या—यः शास्त्रं पठति चिंतयति शृणोति च, तथैव अन्यं पाठयति धर्मोपदेशं च ददाति, पुनः शास्त्रस्य गुरोश्च यो भक्तिकारको भवति, स जीवो मृत्वा मेधावी भवति यथा मतिसारमंत्रिपुत्रः सुबुद्धिमान् निजबुद्ध्या राजलोके वल्लभो जातः ॥ ३० ॥ गाथा—तवनाणगुणसमिद्धो । अवमन्नइ किर न याणइ एसो ॥ सो मरिऊण अदन्नो । दुम्मेहो जायए पुरिसो ॥ ३१ ॥ व्याख्या—यः पुरुषस्तपस्विनं ज्ञानवंतं च गुणवंतं चापि दृष्ट्वा तमप्रत्यवगणयति, यथाऽयं किं जानाति? एवं यो मुखेन वक्ति स जीवो मृत्वा कुबुद्धिमान् अधन्यो लोके च निंदनीयो भवति दुर्बुद्धिवत् ॥ ३१ ॥ अथ तयोः सुबुद्धिदुर्बुद्ध्योः संबंधमाह—

क्षितिप्रतिष्ठिते नगरे चंद्रयशा राजा राज्यं करोति, तस्य मतिसारनामा मंत्री वर्त्तते, तस्य मंत्रिणो द्वौ पुत्रौ स्तः, एकः सुबुद्धिनामा, द्वितीयश्च दुर्बुद्धिनामा मतिसारेण मंत्रिणा तौ द्वावपि कलाचार्यस्य पार्श्वे पाठितौ, परमेकः कलावान् विद्वान् सुबुद्धिश्च जातः, द्वि-

लोकास्तं वंदितुं गताः, देशनाश्रवणानंतरं सुबुद्धिना पृष्टं हे भगवन्! केन कर्मणाऽयं कुबुद्धिरीदृशो जातः? तदा गुरुरुवाच भो मंत्रिन् शृणु? अस्मिन्नेव नगरे विमलाचलनामानौ द्वौ वणिक्पुत्रावभूतां, तयोर्विमलेन गुरोः समीपे दीक्षा गृहीता, क्रमेण स द्वादशांगीपाठको जातः, सोऽन्येषां मुनीनां पाठयति, तुष्टेन गुरुणा तस्मै आचार्यपदं दत्तं, पश्चाद्धर्मोपदेशेन तेन बहवो जनाः प्रतिबोधिताः, स्वायुःक्षयेण च स द्वितीये देवलोके गतः श्रुतभक्तिवशात्. अचलश्च यतीनां ज्ञानवतां च निंदाकरणात्स्वायुःक्षये मृत्वा द्वितीये नरके गतः, ततश्च्युत्वा विमलस्य जीवस्त्वं सुबुद्धिनामा जातः, द्वितीयोऽचलजीवश्च नरकाच्च्युत्वा निंदापापयोगादयं दुर्बुद्धिर्जातः, पुनरप्ययं बहु संसारं भ्रमिष्यति. सुबुद्धिरथ दीक्षां गृहीत्वा श्रुतस्य पठनपाठनं च विधाय स्वायुरंते पंचमे देवलोके देवो भूत्वा क्रमेण मनुजभवं प्राप्य मोक्षं यास्यति. ॥ इति सुबुद्धिकुबुद्धिकथा समाप्ता ॥ अथ षोडशसप्तदशमप्रश्नोत्तरमाह—

गाथा—जो पुण गुरुजणसेवी । धम्माधम्माइं जाणिउं कुणइ ॥ सुयदेवगुरुभत्तो । मरिउं सो पंडिउ होइ ॥ ३१ ॥ व्याख्या—यः पुरुषो वृद्धानां सेवां भक्तिं करोति, पुनर्यः

व चिंतनीय पर ते सर्वेऽपि कलहं कुर्वंतो राज्ञः समीपं समागता, विज्ञप्तश्च तै राजा य-
दस्माकं कलहं त्वं दूरीकुरु? राज्ञा निजमंत्रिणे तत्कलहदूरीकरणार्थमादिष्टं

तत् श्रुत्वा मंत्री किंकर्तव्यमूढः संजातः, तदा तत्रस्थेन सुबुद्धिनाम्ना मंत्रिपुत्रेण तान्
भ्रातॄनेकांते समाकार्य कथितं, यूयं कलहं मा कुरुत? अतिविज्ञेन युष्मत्पित्रा सर्वेभ्यो यु-
ष्मभ्यस्तुल्यमेव धनं दत्तमस्ति, यूयं तन्निधानानां परमार्थं न जानीथ. केशभृतनिधानस्वा-
मिनो गोघोटकप्रमुखं धनं दत्तमस्ति, मृत्तिकाभृतनिधानस्वामिनः क्षेत्रवाटिकादिरूपं धनं दत्त-
मस्ति कज्जलभृतनिधानस्वामिनं द्रुद्माद्रणिकादिगतं धनं दत्तमस्ति. चतुर्थस्य च तत्परिमि-
तमूल्योपेतं स्वर्णरत्नादिरूपं धनं दत्तमस्ति एवं तेन सुबुद्धिना तेषां कलहो दूरीकृतः, ततस्ते
सर्वेऽपि संतुष्टीभूय राज्ञे निवेदयामासुर्यदस्माकं कलहः सुबुद्धिना दूरीकृतोऽस्ति. तत् श्रुत्वा
हृष्टो राजा तस्मै सुबुद्धये निजमंत्रिपदं ददौ, लोकेऽपि च स प्रसिद्धो जातः। द्वितीयो मूर्ख-
भ्राता च कुबुद्धिरितिख्यातो बभूव

अथान्यदा तस्मिन्नगरे एको ज्ञानी गुरुः परिवारयुतः समागतः, तदा नृपसुबुद्धयादयो

पृष्टं भो भद्रक! त्वं कथं भूमित उड्डयन् पुनः पतसि? विद्याधरेणोक्तं मया ममाकाशगामिनीविद्याया एकं पदं विस्मृतमस्ति, तेनाहमुड्डीय पुनः पतामि. कुशलेनोक्तं मम तस्या विद्यायाः प्रथमं पदं ब्रूहि? तत् श्रुत्वा विद्याधरस्तत्प्रथमं पदं कथितवान्. तदा कुशलेन पदानुसारिण्या लब्ध्या विस्मृतं पदं तस्मै कथितं. तत्क्षणमेव तस्याकाशगामिनी विद्या संपूर्णा जाता. अथ स विद्याधरो हृष्टः सन् कुशलस्य पितुर्नाम पृष्ट्वा स्वस्थाने गतः, द्वितीयदिने वैश्रमणश्रेष्ठिनो गृहं पृष्ट्वा स विद्याधरस्तत्र समागतः, तस्मिन्नवसरे स कुशलो देवपूजां करोति. तं दृष्ट्वा तेन विद्याधरेण पृष्टं भो कुशल त्वमिदं किं करोषि? कुशलेनोक्तं देवपूजामहं करोमि. विद्याधरेणोक्तं को देवः? कुशलो जगाद वीतरागो देवः, पुनर्विद्याधरेण पृष्टं को धर्मः? कुशलेनोक्तं श्रीवीतरागप्रणितो धर्मः, विद्याधरो जगाद को गुरुः? तेनोक्तं सत्यधर्मवक्ता गुरुः, एवंविधं सम्यक्त्वं तेन विद्याधरेणाप्यंगीकृतं

ततस्तेन विद्याधरेण वैश्रमणश्रेष्ठिनंप्रत्युक्तं हे श्रेष्ठिन् एकदा मम पित्रैको नैमित्तिकः पृष्टो यन्मम पुत्र्याः को वरो भविष्यति? तदा तेन नैमित्तिकेनोक्तं यस्तव पुत्रस्याकाशगा-

पुण्यपापे विज्ञाय पुण्यमेव करोति, पुनर्यः श्रुतस्य देवस्य गुरोश्च भक्तिं करोति, स जीवो मृत्वा पण्डितो भवति. यथा पूर्वभवे आम्रजीवो देवगुरुभक्त्या कुशलनामा पंडितोऽभूत्. ।३२।

गाथा—मारेइ खायेइ । किं वा पढिएण किं च धम्मेण॥ एय चिय चिंततो । मरिउ सो काहलो होइ ॥३३॥ व्याख्या—यो जीव एव वदति भो मारयतु जीवान्, मांसमदिरादिकं च भक्षीकुर्वंतु, पठनेन किं भवति? तथैव धर्मेणापि किं भवति? इदं वचो जल्पन्, एवं च चिंतयन् स जीवो मृत्वा मूको मूर्खो भवति. यथा पूर्वभवे आम्रसुहृत्कुशलगृहे कर्मकरो जातः ॥ ३३ ॥ तयोः संबंधमाह—

धारावत्यां नगर्यां वैश्रवणनामा धनवान् श्रेष्ठी वसति, तस्य कुशलाख्यः पुत्रो द्वासप्ततिकलायुतो महाविज्ञो बुद्धिनिधानः पदानुसारिणीप्रज्ञाविचक्षणोऽस्ति. तस्य गृहे एकः कर्मकरोऽस्ति, स महाकुरूपवान् दुर्भाग्यवान् मुखरोगी चास्ति; परं तस्योपरि कुशलस्य महान् स्नेहोऽस्ति, स जिनधर्मं जानाति करोति च. अथैकदा स कुशलो वनमध्ये क्रीडां कर्तुं गतः, तत्र तेनैको विद्याधरः पृथिव्या उच्छलन् पुनश्च पतन् दृष्टः, तं तथाविधं दृष्ट्वा कुशलेन

तश्च च्युत्वा युष्मद्गृहे कर्मकरो जातः, पूर्वकृतदुःकर्मानुसारेण स मूको दौर्भाग्यवान् कुरूपश्च जातः, यथा तस्य नामाभूत् तथैव तस्य परिणामोऽप्यभूत्. एवं हे कुशल ज्ञानपंचमीतपःकरणात्तथा गुरुभक्तिकरणाच्च तव पदानुसारिणी लब्धिरभूत्.

इत्थं गुरुमुखात् श्रुत्वा कुशलस्य जातिस्मरणज्ञानं समुत्पन्नं, ततस्तेन देशविरतिरूपो धर्मोंगीकृतः, ततोऽसौ सकलत्रो निजगृहे समागतः, विद्याधरोऽपि वैताढ्ये गतः, अथात्र कुशलः सुंदर्या सह सुखं भुंजानस्तिष्टति. क्रमेण तस्य द्वौ पुत्रौ जातौ, तयोर्वृद्धपुत्रस्य गृहभारं दत्वा कुशलः पित्रा सह दीक्षां लात्वा शुद्धं चारित्रं च प्रपाल्य मोक्षे गतः, नींबस्य जीवस्तु भवे भ्रांत्वा नरके गतः, उक्तं च—जे नाणपंचमीतवं । उत्तमजीवा कुणंति भाववजुआ ॥ उवभुंजिअ मणुयसुहं । पावंति य केवलं नाणं ॥ १ ॥ इत्याम्रनिंबकथा ॥ अथाष्टादशमेकोनविंशतितमप्रश्नोत्तरमाह—

गाथा—सव्वेसिं जीवाणं । तासं न करेइ नो करावेइ ॥ परपीडवज्जणाउ । गोयम धीरो भवे पुरिसो ॥ ३४ ॥ व्याख्या—यो जीवः सर्वेषां जीवानां त्रासं भयं नो ददाति, अ-

मिनीविद्याया विस्मृतं पदं कथयिष्यति स तत्र पुत्र्या भर्त्ता भविष्यति, अतः कारणादहमत्रागतोऽस्मि, ततस्त्वं त्वत्पुत्रं मम सार्थे मुंच? यथा वैताढ्यपर्वते गत्वा मम भगिनीं सुदरीं तेन सार्द्धं विवाह्याहं तं पश्चादत्र समानयामि तद्वच श्रुत्वा श्रेष्ठिना तत्त्वैवांगीकृतं ततः स विद्याधरस्तं श्रेष्ठिसुतं सार्थे गृहीत्वा वैताढ्यपर्वते च निजगृहं समागत्य तेन सह निजां भगिनीं परिणाय्य, तं च शास्वतान् चैत्यान् वंदापयित्वा तेन सह मरूपे समागत्य श्रमणमुनिं च वंदित्वा तत्र स्थितः, तदा कुशलेन मुनये पृष्टं हे भगवन्! मम केन कर्मणा निर्मला पदानुसारिणी लब्धिर्जाता? तदा मुनिः कथयति—

इतो भवात्तृतीये भवे आम्रनिंबनामानौ द्वौ कुलपुत्रावभूतां, तौ परस्परमत्यंतस्नेहपरौ, तयोर्मध्ये एक आम्रो गुरोः सेवां करोति, पुण्यपापयोर्विचारं पृच्छति, एकदा तस्मै गुरुणा भणितं त्वं पंचवर्षोपरि पंचमासान् यावद् ज्ञानपंचमीतपः कुरु? अथैवं करणातः पुण्यबंधनात्त्वं ततो मृत्वा देवोऽभूः, ततश्च च्युत्वा त्वमत्र वैश्रमणश्रेष्ठिनो गृहे समुत्पन्नः, द्वितीयो निंबाख्यस्तव सुहृन्नास्तिकत्वेन तथा परनिंदागुरुनिंदाधर्मनिंदाकरणाच्च नरके गत्वा, त-

ऽस्ति, तदा राज्ञा सभामध्ये वीटकं करे गृहीत्वोर्ध्वीकृतं, कथितं च यः कोऽपि सिंहं विदारयति तस्याहमिदं वीटकं यच्छामि. राज्ञेत्युक्ते कोऽपि तद्वीटकं न गृह्णाति; तदाऽजयसिंहेन तगृहीतं, कथितं चाहमेकाक्येव सिंहं विदारयिष्यामि लोकानां च सुखं करिष्यामि; इत्युक्त्वाऽजयसिंहो वने गत्वा बाणेन च सिंहं विदारितवान्; एवं तं सिंहं मृतं ज्ञात्वा स पश्चाद्वलित्वा राज्ञोऽग्रे गत्वा प्रणामं कृत्वा स्थितः, राजापि तुष्टः सन् तं वस्त्रालंकारादि दत्वा राजमान्यं विहितवान्.

अथैकदा कश्चिदेकः सामंतो राज्ञ आज्ञां न मन्यते, मार्गे च लोकानामुपरि धाटीं पातयति, ग्रामांश्च लुंटति. तं वृत्तांतं ज्ञात्वा राज्ञाऽजयसिंहस्य तज्जयाय वीटकं दत्तं, कथितं च भो अजयसिंह त्वं तत्र गत्वा तं दुष्टं च बध्ध्वाऽस्माकं पार्श्वे समानय? तदाऽजयसिंहः कटकं लात्वा तस्य सन्मुखं गतः, तस्य समीपे च तेन दूतो मुक्तः, दूतेन गत्वा तस्मै सामंतायोक्तं यत्वं राज्ञ आज्ञां मानयस्व? परं सामंतेन तद्वचो न स्वीकृतं. दूतेन पश्चादागत्याऽजयसिंहायोक्तं यत्स सामंतो राज्ञ आज्ञां नांगीकरोति, कथयति चाहं युद्धं करिष्यामीति. त-

न्यस्मात्रानं च नो कारापयति, तथा यः परपीडां वर्जयति, एवंविधः पुरुषो हे गौतम ! धीरो भवति, यथाऽभयसिंहाख्यः पुरुषो धीरः साहसिकश्च संजातः ॥ ३४ ॥ गाथा—कुक्कुरतित्तरलावे । सूयरहिरणे य विविहजीवे य ॥ निच्चं विग्घो धारेइ । सो सबकाल हव-इ भीरु ॥ ३५ ॥ व्याख्या—यः पुरुषः कुक्कुरतित्तरलावान्, पुनः शूकरमृगादिविविधजीवान् नित्यं पंजरे क्षिप्त्वा रक्षति, तेषां सर्वजीवानां चोद्वेगं जनयति स पुरुषो मृत्वा सर्वकालं यावद्भीरुर्भवति, अभयसिंहस्य लघुभ्रातृधनसिंहवत् ॥३५॥ अथ तयोर्द्वयोः कथामाह—

पृथ्वीतिलकपुरे पृथ्वीराजाभिधो राजा राज्यं करोति, तत्र धर्मसिंहनामैकः क्षत्रियो वसति, स जिनधर्मे रक्तोऽस्ति, तस्याऽभयसिंहधनसिंहाख्यौ द्वौ पुत्रावभूतां तयोर्मध्ये वृद्धोऽभयसिंहो व्याघ्रसिंहसर्पादिभ्योऽपि भयं न प्राप्नोति, चेदाकाशाद्वज्रं पतेत्तथापि स आतंकं नो लभते, अन्यो धनसिंहाख्यो लघुभ्राता च रज्जुमपि दृष्ट्वा तं सर्पं मनुते, एवं स मनस्यतीवभयभीतो वर्तते एकदा नगरसमीपे सिंहमागतं श्रुत्वा कोऽपि जनस्तन्मार्गे न याति, तदा प्रधानपुरुषैः राज्ञे निवेदितं भो महाराज नगरसमीपे एकः सिंहः समागत्य स्थितो

अथैकदा तत्र श्रुतागराख्यश्चतुर्ज्ञानी मुनिः समागतः, तदा सपरिवारो राजा तं वंदितुं
गतः, धर्मसिंहोपि मुनिवंदनार्थं तत्र समायातः, देशनानंतरं धर्मसिंहेन गुरवे पृष्टं हे भगव-
न्! मम वृद्धपुत्रो महासाहसिकः पराक्रमी चास्ति, लघुपुत्रस्तु भयातुरोऽस्ति, अत आभ्यां
पूर्वभवे किं कर्मोपार्जितं तत्कृपां विधाय यूयं कथयत? तदा गुरुरवदत्. अस्मिन्नेव नगरे इ-
मौ पूर्वभवे पूरणधरणनामानौ द्वावाभीरकावभूतां, तयोः पूरणेन दया पालिता जीवानां च
रक्षा कृता, धरणेन च तित्तरादयस्त्रासोत्पादनपूर्वकं पंजरे क्षिप्ताः, पुनस्तेन मृगादयो बंधन-
पूर्वकं मारिताः, अतो दयापालनतस्तवायं पुत्रः पूरणजीवोऽभयसिंहो महापराक्रमी निर्भयः
शूरश्च जातः, धरणजीवश्च जीवानां त्रासोत्पादनादयं तव पुत्रो भयभीतो धनसिंहो जातः,
तत् श्रुत्वा धर्मसिंहोऽभयसिंहो धनसिंहश्च ते त्रयोऽपि श्राद्धधर्मं गृहीत्वा स्वायुःक्षये स्वर्गं
गताः ॥ इत्यभयसिंहधनसिंहयोः कथा समाप्ता. ॥ अथ विंशतितमप्रश्नोत्तरमाह—

गाथा—विज्जं विन्नाणं वा । मिच्छाविणएण गिण्हिउं जो उ ॥ अवमन्नइ आयरियं । सा
विज्जा निप्फला तस्स ॥ २६ ॥ व्याख्या—यः पुरुषो विद्यां विज्ञानं वा कपटयुक्तविनयेन

त् श्रुत्वाऽजयसिंहो रात्रावेकाक्येव प्रछन्नरीत्या दुर्गमुल्लंघ्य सामतस्य गृहे प्रविष्टः, तत्र तं सुप्त सामतमुत्थाप्य तेन सह च युद्धं कृत्वा तं बद्धवान्, ततोऽनंतर तस्य सामतस्य भार्ययाऽजयसिंहपार्श्वाद्भर्तृरूपा भिक्षा मार्गयित्वा नत्वा च स मुक्तबंधनः कारित., तदा सोऽप्यजयसिंहस्य सेवको जात., अथ तस्यामेव रात्रावजयसिंहस्य कटके सर्वेऽपि जनाश्चितातुरा जाता', यदस्माक स्वामी क्व गत' ? कटकमध्येऽपि स क्वापि न दृश्यते, एव सर्वे सुभटा मिलित्वा यदा चिंतातुरा जातास्तदैकेन जनेन तत्र समागत्योक्त यद्भो सुभटा अस्मत्स्वामिनाऽजयसिंहेन कथितमस्ति यदहं सामतस्य गृहे तं जित्वा स्थितोऽस्मि, अतो यूय सर्वेऽप्यत्रागच्छत ? ता वार्ता श्रुत्वा सर्वेऽपि सानदाश्चर्यं प्राप्ता ततस्तत्र. गताः, सामतेन ते सर्वेऽपि भोजन कारिता सन्मानिताश्च. ततोऽसावजयसिंहस्त सामत स्वसार्धं गृहीत्वा राज्ञोऽग्रे चगत्वा कथयामास भो महाराज सामतोऽयमद्यप्रभृति भवत्सेवको जातोऽस्ति, अहं च तं सार्धं लात्वाऽत्रागतोऽस्मि. तदा राजा हर्षवशादजयसिंहस्यैकं देश दत्तवान्, सामंत च तस्य देशे मुक्तवान्.

ता, विद्यापि तस्य निष्फला भूता. यतो गुरुलोपी महापापीति वचनात्. गुरोरपलापकर्त्तुरा-
गामिनि भवेऽपि विद्या निष्फला भवति, विज्ञानं च नागच्छति, अत एव गुरोर्विनयो भव्य-
प्रकारेण कार्यः। इति त्रिदंडिनो विंशतितमा कथा समाप्ता.॥ अथैकविंशतितमप्रश्नोत्तरमाह—

गाथा—बहु मन्नइ आयरियं। विणयसमग्गो गुणेहिं संजुत्तो॥ इह जा गहिया वि-
ज्जा। सा सफला होइ लोगंमि॥ २१॥ व्याख्या—यः पुमान् गुरुं बहुमन्यते, पुनर्विनय-
वान् भवति, गुणैश्च संयुक्तो भवति, तद्गृहीता विद्या लोके सफला भवति, यथा श्रेणिकेन
विनयेन गृहीताऽऽकर्षिणीविद्या सफला जाता॥ २१॥ श्रेणिकवृत्तांतो यथा—राजगृहे नगरे
श्रेणिको राजा राज्यं करोति, तस्य पट्टराज्ञी चेल्लणानाम्नी वर्त्तते, पुनस्तस्यैकोऽभयकुमार-
नामा मंत्री विद्यते. अथैकदा चेल्लणाया गर्भप्रभावादीदृशो मनसि दोहद उत्पन्नो यथा वन-
सहिते एकस्तंभे धवलगृहेऽहं वसामीति. तस्य दोहदस्याऽपूर्णीभावात्सा क्रमेणातीवदुर्बला ब-
भूव. एकदा राज्ञा सा पृष्टा त्वं कथं दुर्बला जाता? तदा तया स्वकीयः सकलोऽपि दोहद-
वृत्तांतः कथितः, पश्चाद्राज्ञा स वृत्तांतोऽभयकुमाराय निवेदयित्वोक्तं त्वमस्या दोहदं केनाप्यु-

गुरोः पार्श्वाद्गृहीत्वा गुरुमवमन्यते पश्चाद्गुरुंप्रति नो मन्यते तस्य विद्या च कला च निष्फलैव भवति, यथा त्रिदण्डिकस्य कला निष्फला जाता ॥ ३६ ॥ तस्य संबधमाह—

राजपुरे नगरे एको विद्यावान् नापितो वसति, विद्याबलेन च स नापित आकाशे क्षुरप्रादीनि शस्त्राणि धारयति, ततो लोकमध्ये सोऽतीव प्रसिद्धो जातः, तस्मिन्नेव नगरे एकस्त्रिदण्डिको ब्राह्मणोऽस्य नापितस्य विद्या गृहीतु तस्य भक्ति करोति, एकदा तेन तस्य विद्यार्पणार्थं प्रार्थना कृता, तदा संतुष्टेन तेन तस्मै विधिपूर्वक सा विद्या दत्ता, तेनापि च सा साधिता, तद्विद्याबलेन च स आकाशे निजत्रिदण्डिका स्थापयति; लोका अपि सर्वे तस्य तत्कौतुक पश्यति, प्रशसा च कुर्वंति यश्राऽय महाविद्यावान् वर्तत इति अन्यदा लोकैस्तस्मै पृष्ट भो त्रिदण्डिक ! त्वया कस्य गुरोः पार्श्वादिय विद्या शिक्षिता ? तेनोक्त मयेय विद्या हिमवतवासिनो विद्याधरस्य पार्श्वाच्छिक्षिता, अतो मम विद्यागुरुर्विद्याधरोऽस्ति, इत्युक्त्वा तेन तस्य नापितस्य नाम न गृहीत लज्जावशात् तत्क्षणमेव गुर्वपलपनात्तस्य त्रिदण्ड आकाशादधः पतित , तद् दृष्ट्वा लोकैर्हास्य विहित, कथित चाय गुरुलोपी, एव तस्यावहीलना महती जा-

मुक्ता, क्रमेण च सा निजगृहं प्राप्ता. अथ कतिचिद्दिवसानंतरं सा कन्या तत्पित्रा केनचिद्युवा सह परिणायिता. तस्यां रात्रौ सा निजवृत्तांतं स्वभर्त्रे निवेद्य तस्याज्ञां चादायारामिकस्य पार्श्वे गंतुं मार्गे चलिता. पथि तस्याः केचिच्चौरा मिलिताः, तया तेभ्योऽपि निजवृत्तांतो निरूपितः, तदा तैरपि मुक्ता पश्चयग्र चचाल. इतस्तस्याः पथि राक्षसा मिलिताः, राक्षसैरपि तस्याः सत्यं वृत्तांतं श्रुत्वा सा मुक्ता. क्रमेणारामिकपार्श्वे वाटिकामध्ये सा समागता. तदा तामागच्छंतीं दृष्ट्वा स तत उत्थाय तां च निजभगिनीं कथयित्वा तस्याः सन्मुखं समागत्य मिलितः, ततस्तस्यै वस्त्राभरणादीनि दत्वा स तां पश्चात्प्रेषितवान्. पश्चाद्वलमाना राक्षसैरपि किंचिद्दत्वा सा मुक्ता, पश्चात्तस्याः सत्यवचनैस्तुष्टैश्चौरैरपि सा किंचिद्दत्वा मुक्ता, एवं क्रमेणैषा गृहं प्राप्ता, सत्यवचसा भर्त्रापि सा सन्मानिता.

तत् श्रुत्वा सभाजनानां मध्यात्तेन चौररूपेण चांडालेनोक्तं अहो कीदृशास्ते चौरा मूर्खाः! यैरीदृशी नूतनपरिणीता सयौवना वस्त्राभरणालंकृता कन्या मुक्ता, तत् श्रुत्वाऽभयकुमारेण चिंतितं नूनमयं चांडाल एव चौरः, अनेनैवाम्रफलं गृहीतं संभवति. ततस्तं चांडा-

पायेन बुद्ध्या पूरय? तदाऽभयकुमारेणाराधितो देव: प्रकटीभूयोपवनोपेतमेकस्तंभान्वितं धवलगृहं कृतवान्. तस्योपवने सर्वर्तुभवानि सकलानि फलानि सर्वदैव लभ्यते.

अथ तस्मिन्नवसरे तत्र नगरे एकश्चाण्डालो वसति, तस्य भार्याया अकाले आम्रफलभक्षणदोहदः समुत्पन्नो गर्भप्रभावात्. तदा तेन चाण्डालेन स्वकीयाकर्षिणीविद्याबलेन तस्य देवनिर्मितस्योपवनस्य मध्यादाम्रवृक्षशाखां नामयित्वा तत आम्रफलं च गृहीत्वा निजभार्याया दोहदः पूरितः, चाण्डालस्पर्शस्य छोतिकरणात् स आम्रवृक्षः शुष्कीभूत:, प्रभातसमये राज्ञा स वृत्तान्तो ज्ञात:, अभयकुमारमाहूय प्रोक्तं त्वमस्याम्रफलस्य चौरं शोधय? ततोऽभयकुमार: सर्वान्नगरजनानाहूय एकाया: कन्यकायाः कथामित्थं कथयितुं लग्नः—एकस्मिन् ग्रामे काचिदेका वणिक्कन्यका द्वादशवार्षिका कुमारिका एकस्मादारामात्फलपुष्पाणि चोरयित्वा प्रत्यहं कामदेवस्य पूजनं करोति. अथैकदाऽऽरामिकेण पुष्पाणि गृह्णंती सा कन्या गृहीता, भोगाय च तस्याः स प्रार्थनां कर्तुं लग्नः, तदा तयोक्तं भो आरामिक! यदाहं परिणयिष्यामि तदा प्रथममहं तव समीपे समागमिष्यामि. तदाऽऽरामिकेण तद्वचनं स्वीकृत्य सा

मप्रश्नोत्तरमाह—

गाथा—जो दाणं दाऊणं। चिंतइ हा कीम मए इयं दिन्नं ॥ थोवेण वि धणरिद्धि। अचिरावि हु नासए तस्स ॥ १८ ॥ व्याख्या—यः पुरुषो दानं दत्वा हृदये एवं चिंतयति, यथा हा इति खेदे मयैतद्दानं कथं दत्तं? इति यः पश्चात्तापं करोति, तस्य गृहाल्लक्ष्मीः स्तोककालेन याति गच्छति, धनदत्तसुतसुधनवत्. ॥१८॥ गाथा—थोवे धणेवि हु सत्तो। देइ दाणं पवट्टइ परेवि ॥ जो पुरिसो तस्स धणं। गोयम संमिलइ परेजम्मे ॥ १९ ॥ व्याख्या—यः पुरुषो निजे स्तोके धने सत्यपि स्वशक्त्या तस्य सुपात्रे दानं दत्ते, पुनरन्यस्य पार्श्वाच्च दापयति, तस्य पुरुषस्य हे गौतम! परजन्मनि लक्ष्मीः संमिलति. समुद्रदत्तपुत्रमदनवत् ॥ ॥ १९ ॥ तत्संबंधमाह—

दक्षिणदेशे दक्षिणमथुरायां नगर्यां धनदत्तनामा श्रेष्ठी वसति, स कोटीश्वरो विद्यते, तस्य सुधननामा पुत्रोऽस्ति, स प्रत्यहं व्यवसायं करोति, इत उत्तरमथुरायामेकः समुद्रदत्ताख्यो व्यवहारी वर्त्तते, तेन सह स व्यापारं करोति; क्रयाणकानां पंचशतशकटप्रमाणानां

तं राज्ञः पार्श्वे समानीयाऽभयकुमारेणोक्तं हे स्वामिन्नयमेवाम्रफलस्य चौरः संभवति. तदा राजा तं चाण्डालं पृच्छति भो चाण्डाल? त्वया केन प्रकारेणाम्रफलं गृहीतं? तदा तेनापि सत्यमुक्तं हे स्वामिन् मया आकर्षिणीविद्ययाऽऽम्रफलं गृहीतमस्ति स्वजायाया दोहदपूरणार्थं तत् श्रुत्वा श्रेणिकेनोक्तं तामकर्षिणीं विद्यां मम शिक्षय? तदा स मातंगः सिंहासनोपरिस्थस्य राज्ञः पुरः स्थित्वा वारंवारं मंत्रविद्यां ददाति परं राज्ञो मुखे सा नायाति. तद् दृष्ट्वाऽभयकुमारमन्त्रीश्वरेणोक्तं हे राजन्! विद्या यदि विनयेन गृह्यते तदैव साऽऽयाति नान्यथा. उक्तं च—विनयेन विद्या ग्राह्या । पुष्कलेन धनेन वा ॥ अथवा विद्यया विद्या । चतुर्थं नैव कारणं ॥ १ ॥ अत एव सिंहासने समुपाविश्य गुरुं च कृत्वा, यूयं च स्वयमग्रे स्थित्वा मुखेनैव वदथ, यथा भो गुरो मां विद्यां पाठयत? इत्येव करणतो विद्या समायास्यति; तदा राज्ञापि तथैव कृतं, तत्क्षणमेव तस्य विद्या समायाता. ततोऽभयकुमारवचनतो राजा तं चौरदण्डान्निर्मुक्तं चकार एवं विनयत एव विद्या सफला जाता. अतो विनयवद्भिर्विनयेनैव विद्या ग्राह्या ॥ इति विनयोपरि श्रेणिकनृपकथा समाप्ता ॥ अथ द्वात्रिंशत्तितमत्रयोत्रिंशतित-

त्वा तेन पतितुं प्रारब्धं, तदा तत्र स्थितेन केनचिद्दषिणा स निवारितः, कथितं च हे सुध-
न! त्वं मरणसाहसं मा कुरु? यतः कुमरणातस्त्वं व्यंतरो भविष्यसि, इति श्रुत्वा पर्वततः
समुत्तीर्य स मुनिं वंदित्वा स्थितः, तदा मुनिस्तंप्रति कथयति कर्मणः कोऽपि न छुटति,
यतः—कर्मणो हि प्रधानत्वं । किं कुर्वंति शुभा ग्रहाः ॥ वसिष्ठदत्तलग्नोऽपि । रामः प्रव्र-
जितो वने ॥ १ ॥ आपद्गतान् हससि किं द्रविणांध मूढ । लक्ष्मीः स्थिरा न भवतीह कि-
मत्र चित्रं ॥ किं त्वं न पश्यसि घटीं जलयंत्रचक्रे । रिक्ता भवंति भरिता भरिताश्च रिक्ताः
॥ २ ॥ अतस्त्वं लक्ष्मीसंबंधि दुःखं मा कुरु? लक्ष्मीरस्थिरा पुनरनर्थानां मूलमस्ति.

एवं प्रतिबोधितः स श्रेष्ठी स्थालस्य खंडं पार्श्वे रक्षयित्वा तस्य मुनेः पार्श्वे दीक्षां ज-
ग्राह; क्रमेण पठितो गीतार्थश्च जातः, ततस्तस्यावधिज्ञानं समुत्पन्नं. ततोऽसौ मह्यां विहर-
न् क्रमेणोत्तरमथुरायां समुद्रदत्तस्य गृहे समागतः, यावत्स तत्रेतस्ततः पश्यति, तावत्तेन गृ-
हैककोणे सा स्वर्णकुंभिका पतिता दृष्टा, स्वर्णसिंहासनमपि पतितं दृष्टं, एवं सर्वमप्यात्मी-
यं वस्तु समुपलक्ष्य स मुनिः समुद्रदत्तंप्रति कथयति, भो श्रेष्ठिन्! एतानि सर्वाणि वस्तूनि

राशि प्रवहणेषु नीत्वा स समुद्रमध्ये चलति, पुन. स व्याजेऽपि धनं ददाति, तथैव किंचिद् न स निधानेऽपि रक्षति. अथैकदा दाहज्वरेण धनदत्तो मृत., तदा सत्रविभि सुधनस्तस्य पट्टे स्थापित , एव स सुधनः कुटुंबभार निर्वहति एकदा स सुधन· स्वर्णकुंडिका नीरेण नीत्वा स्वर्णसिंहासनोपरि च स्थित्वा स्नान करोति, स्नानानंतरं च सा स्वर्णकुंडिका तत्स्वर्णसिंहासन चाकाशे उड्डीय गते ततोऽसौ देवपूजा कर्तुं लग्न , देवपूजानंतर च तद्देवगृहं देवबिंब च परिकरयुत सर्वमुड्डीयाकाशे गत तस्मिन्नेव समये प्रवहणभंगस्यापि समाचारः समागत·, ततोऽसौ भोजन कर्त्तुमुपविष्टः, भोजनानंतरं द्वात्रिंशत्कचोलिकासहित. स सुवर्णस्थालोऽप्युड्डीयाकाशे गंतु लग्नः, तदा सुधनेन झटिति हस्तेन स स्थालो गृहीतः, तदा तस्य स्थालस्यैक. खंडस्तस्य हस्ते स्थितः, पर स्थालस्तूड्डीय गत·, एव तस्य सर्वापि गृहलक्ष्मीर्गता, जातश्च स निर्धनः, तदा कश्चिदेको नर आगत्य त वदति, तव शिरसि मम लक्षद्रव्यस्य देय वर्त्तते तन्मां प्रयच्छ ? तत् श्रुत्वा तेन निधानं निष्कासितं, तदा तदपि सर्वं तेन भस्मीभूत दृष्ट अथ तद्दुःखात्स गृह त्यक्त्वा देशांतरप्रति चलित·, पथि च पर्वतोपरि चटि-

श्रीपुरे नगरे जिनदत्ताभिधः श्रेष्ठी वसति, तस्य पद्माकरगुणाकरनामानौ द्वौ पुत्रावभूतां. पित्रा निजमरणसमये ताभ्यां कथितं यदत्र मह्या अधोगतं निधानं युवाभ्यां तुल्यतया विभज्य गृहणीयं. अथ पितुर्मरणानंतरमेकेन वृद्धभ्रात्रा रात्रौ प्रछन्नतया तन्निधानं निष्कास्य गृहीतं. द्वितीयदिने तेन निजलघुभ्रातरंप्रति कथितं अद्यावां तन्निधानं निष्कासयावः, तेनापि कथितं वरं. अथ तत्र गत्वा ताभ्यां निधानकृते भूमिः खनिता, परं ततो निधानं न निःसृतं. तदा मायाविना वृद्धभ्रात्रा प्रोक्तं अहो इतः केनापि पुरुषेण निधानं चोरितमस्ति. एवं लघुभ्रातृवंचनादहं मृत्वायं सुधनो जातः, स मम लघुभ्राता च मृत्वाऽयं तव पुत्रो मदनाख्यो जातः, अथ मम लक्ष्मीर्मदनस्य पुण्यवशान्मदनगृहे समागता. तत् श्रुत्वा समुद्रदत्तेन दीक्षा गृहीता. अथ मदनो गृहपतिर्जातः, मुनिर्वदति मया दानं दत्वा पश्चात्तापः कृतस्तेन मल्लक्ष्मीर्मम गृहाद्गता, मदनेन च स्वयं दानं दत्तं, अन्यस्मादपि च दापितं, तस्मात्तस्य बह्वी लक्ष्मीर्मिलिता. पश्चान्मदनोऽपि श्राद्धधर्ममंगीकृत्य स्वर्गसुखं च भुक्त्वा मनुष्यीभूय चारित्रं गृहीत्वा मोक्षं गतः ॥ इति सुधनमदनयोः कथा संपूर्णा. ॥ अथ चतुर्विंशति-

त्वया कारापितानि वा तव पूर्वजेन कारापितानि? तदा श्रेष्ठिनोक्तं मयैवैतानि कारापितानि सन्ति, तदा ऋषिणोक्तं त्वमस्मिन् खण्डैकरहिते स्थाले कथं भोजनं करोषि? तत् श्रुत्वा श्रेष्ठिनोक्तं अस्मिन् स्थाले खण्डो न लगति, तदा मुनिना निजझोळिकातस्तं खण्डं निष्कास्य तस्मिन् स्थाले स दत्तः, तदैव स खण्डः स्थाले लग्नः, श्रेष्ठ्यादिसर्वकुटुम्बिना हृदि चमत्कारो जातः, तदा श्रेष्ठी तं मुनिं वंदित्वा पृच्छति, भो मुने अत्र किं कारणं? मुनिर्ब्रूते त्वं मिथ्या कथं जल्पसि? इयं भवदीया ऋद्धिर्नास्ति, एषा ऋद्धिर्मदीयैव वर्त्तते मया सा समुपलक्षितास्ति, अतस्त्वं सत्यं कथय? तदा तेन सत्यं प्रोक्तं हे मुने! मद्गृहे समागताया अस्या ऋद्धेरष्टौ वर्षाणि जातानि सन्ति तदा मुनिर्वदति यदा मम पिता स्वर्गे गतस्तदादितः इयं लक्ष्मीर्मद्गृहाद्गता, तद्वैराग्याच्च मया दीक्षा गृहीता, अवधिज्ञानेन च ज्ञात्वाऽहमत्रागतोऽस्मि तदा श्रेष्ठिनोक्तं भो मुने त्वमिदं सर्वं गृहाण? सुखेन च भुंक्ष्व? तदा मुनिनोक्तं हे समुद्रदत्त! मम पश्यत एव या लक्ष्मीर्गता सा मया कथं गृह्यते? श्रेष्ठी पृच्छति हे मुने! अस्या ऋद्धेर्गमने कारणं किं? तत्कथय? तदा मुनिर्निजं पूर्वभवं कथयति

इत्युक्त्वा सा कार्यार्थं पारिवेश्मिकगृहे गता. संगमश्च तामुष्णां क्षैरेयीं शीतलां करोति.

इतस्तस्मिन्नवसरे तस्य भाग्यवशात्कश्चिन्मासोपवासी मुनिस्तस्य गृहे पारणकदिवसे आहारार्थं समागतः, तं साधुं दृष्ट्वा संगमो भव्यभावनयोल्लाय तत्सर्वमपि परमान्नं तस्मै ददौ. साधोर्गमनानंतरं धन्ना स्वगृहांतरागता, पुत्रस्य पार्श्वे च स्थालीं क्षैरेयीरहितां निरीक्ष्य सा चिंतयामास, नूनमनेन परिवेषिता सकलापि क्षैरेयी भक्षितास्ति, अतोऽहमपरां क्षैरेयीं तस्य परिवेषयामीति विचार्य तया तस्या स्थाल्यामपरा क्षैरेयी परिक्षिप्ता. सा क्षैरेयी संगमेन भक्षिता, ततोऽसौ वत्सान् चारयितुं वने ययौ. अथ तस्य मात्रा धन्नया चिंतितं अहो मम पुत्रः किं नित्यमेतावतीं क्षुधं सहते? येनैतावती क्षैरेयी तेन भक्षिता; एवं मातुर्दृष्टिदोषतो जातविसूचिकया स तस्यामेव रात्रौ मृत्वा राजगृहनगर्यां गोभद्रश्रेष्ठिनो गृहे भद्राभिधन्नार्यायाः कुक्षौ पुत्रत्वेनोत्पन्नः, रात्रौ स्वप्नमध्ये तया शालिक्षेत्रं दृष्टं, तेन तस्य जन्मानंतरं पितृभ्यां तस्य शालिभद्र इति नाम दत्तं. यौवने च पित्रा स द्वात्रिंशत्कन्याभिः सह परिणायितः, ताभिः सह स विषयसुखानि भुनक्ति.

तम प्रश्नोत्तरमाह—

गाथा—ज ज नियमणइर्छं । त तं साहूण देइ सद्धाए ॥ दिन्नेइ य नाणुतप्पइ । तस्स थिरा होइ धनरिद्दी ॥ ४० ॥ व्याख्या—यद्यद्वस्तु स्वमनसि रोचते तत्तद्वस्तु चेत्सद्भावेन साधुभ्य॰ प्रदीयते, दत्वा च यः पश्चात्ताप न करोति तस्य पुरुषस्य धनऋद्धिः स्थिरा भवति शालिभद्रवत् ॥ ४० ॥ तस्य सबधमाह—मगधदेशे राजगृहीनगरीसमीपे शालिनामैको ग्रामो वर्त्तते, तत्र धन्नाभिधा काचिदेकाऽऽभीरी वसति, तस्या. सगमाभिध॰ सुतोऽस्ति स सगमो लोकाना गोवत्साश्चारयति एकदा श्राद्धदिने तेन सगमेन मातु. पार्श्वे भक्षणाय कैरेयी मार्गिता तदा मात्रोक्त वत्स कैरेयीमद्द कुतो निष्कासयामि? इति कथयित्वा सा रुरोद तदा तद्गृहनिकटवर्त्तिन्यश्चतस्रो वनितास्तत्र समागत्य तस्या रोदनकारण च विज्ञाय ता प्रति कथयामासु॰, भो धन्ने त्व मा रुदन कुरु? वय तुभ्य कैरेयीसामग्रीर्दास्याम , इत्युक्त्वैकया दुग्धं, अन्यया शालि परया च घृतमपरया च शर्करेत्यादिसामग्री दत्ता तदा तया कैरेयीं निष्पाद्य स्थाले च परिवेष्य स्वपुत्राय सगमायोक्त हे पुत्र! त्वमिमा कैरेयीं भुङ्क्ष्व?

रत्नकंबलवार्त्ता श्रुत्वा, ततस्तयैको रत्नकंबलो राज्ञः पार्श्वे मार्गितः, तदा राज्ञा तं रत्नकंबल-
व्यापारिणं पुनराहूय कथितमेकं रत्नकंबलं त्वं मे मूल्येन देहि? व्यवहारिणा प्रोक्तं ते सर्वेऽ-
पि रत्नकंबला भद्रया मूल्येन गृहीताः, तत् श्रुत्वा राज्ञा भद्रापार्श्वादेको रत्नकंबलो मार्गि-
तः, तदा भद्रयोक्तं ते सर्वेऽपि रत्नकंबला मया खंडशः कृत्वा मम द्वात्रिंशद्वधूभ्यः प्रदत्ताः,
ताभिश्च तैर्निजचरणानि प्रमार्ज्य खालमध्ये क्षिप्ताः, तत् श्रुत्वा विस्मितो राजा शालिभ-
द्रस्य समृद्धिं द्रष्टुं तस्य गृहे समागतः, तदा भद्रा सप्तभूमिकोपरिस्थशालिभद्रस्य पार्श्वे ग-
त्वा तं कथयति.

हे वत्स! त्वं मनाग् नीचैः समागच्छ? अस्माकं राजा श्रेणिकोऽस्मद्गृहे समागतोऽस्ति.
तदा शालिभद्रस्तं श्रेणिकराजानं किंचित् क्रयाणकं विज्ञाय कथयति भो मातस्त्वमेव तत्क्र-
याणकमिच्छितमूल्यदानेन गृहाण? तद्विषये तत्र मदागमनस्य किंचिदपि प्रयोजनं नास्ति.
तदा भद्रयोक्तं हे पुत्र! श्रेणिकाभिधं किंचित्क्रयाणकं नास्ति, परं स श्रेणिकोऽस्मन्नगराधि-
पतिर्नृपोऽस्ति, अतस्त्वं नीचैरागत्य तस्मै प्रणामं कुरु? तदा शालिभद्रस्तद्वचसा नीचैराग-

अथैकदा समये गोभद्रश्रेष्ठिना वैराग्यतः स्वमनसि चिंतितं यदयं संसारो जलतरंगव-
ल्लोलोऽसारश्चास्ति, इति विचार्य स गुरुसमीपे दीक्षा गृहीत्वा कियत्कालं च चारित्रं प्रतिपा-
ल्य मनुष्यायुः संपूर्णीकृत्य मृत्वा देवोऽभूत्. स गोभद्रदेवः पुत्रमोहात्सर्वदा तस्य वधूना
कृते नवनवाभरणवस्त्रभूतास्त्रयस्त्रिंशत्पेटिका नित्यं स्वर्गान्मुंचति, एवं स शालिभद्रो विवि-
धान् दिव्यभोगान् सर्वदा भुनक्ति, येन तस्य सूर्योद्गमनास्तकालमपि न ज्ञायते, सर्वमपि
गृहव्यापारं तस्य माता भद्रैव करोति. इतः कश्चिद्वैदेशिको नेपालदेशात्सपादलक्षमूल्यान्
षोडश रत्नकंबलान् समानीय तत्र राजगृहे विक्रयार्थं चतुष्पथे सर्वलोकान्प्रति दर्शयामास,
परं बहुमूल्यत्वात्तान् कोऽपि न गृह्णाति. श्रेणिकराज्ञाऽपि बहुमूल्यत्वात्तेन ते निजराज्ञीकृते-
ऽपि न गृहीता.

अथ क्रमेण स वैदेशिको विरक्तः सन् पथि चलन् भद्राया गृहद्वारसमीपे समागतः, त-
दा भद्रया ते सर्वेऽपि रत्नकंबला मूल्येन गृहीता, अर्द्धमर्द्धं विभज्य वधूभ्यः प्रदत्ताः, तान्निर्व-
धूभिश्च तैर्निजचरणानि प्रमृज्य ते गृहखालमध्ये प्रक्षिप्ताः, अथ श्रेणिकपट्टराज्ञ्या चेल्लणया

व्यं शालिभद्रेण निर्माल्यीकृत्यात्र क्षिप्तमस्ति. अथैवं तस्यर्द्धितो विस्मितो राजा भोजनं कृत्वा स्वस्थाने गतः ।

अथ तत्र स्थितः शालिभद्रश्चिंतयति नूनमहमल्पपुण्यकोऽस्मि, येन ममोपर्यपि राजा वर्त्तते, इति वैराग्यात् स प्रत्यहमेकैकां स्त्रियं त्यजति. अथ तस्य शालिभद्रस्यैका भगिनी पूर्वं धन्नाख्यव्यवहारिणा परिणीतास्ति, सा निजभ्रातुर्वैराग्यदशां स्मृत्वैकदा रुदितुं लग्ना. तदा स्नानार्थं स्थितेन धन्नेन तां रुदतीं दृष्ट्वा पृष्टं भो प्रिये! त्वं कथं रोदिषि? तदा तया कथितं मद्भ्राता दीक्षेच्छुः प्रत्यहमेकैकां स्त्रियं त्यजति, तद्वृत्तस्मृतितो मे नेत्राभ्यामश्रूणि गलंति. तत् श्रुत्वा धन्नः कथयति हे प्रिये नूनं तव भ्राता कातरोऽस्ति, य एवं रंकवत्प्रत्यहमेकैकां स्त्रियं त्यजति, यदि स संविग्नस्तर्हि एकवेलमेव कथं सर्वाः स्त्रियो न त्यजति? तदा तद्भार्ययोक्तं हे स्वामिन् यद्येवं ब्रूथ तर्हि यूयमेव कथं न त्यजथ? भवतामप्यष्टौ स्त्रियः संति, जगति सर्वेऽपि कथयितुं चतुराः, कर्त्तुं तु दुष्करा एव. तत् श्रुत्वा वैराग्यमापन्नेन धन्नेन कथितं हे प्रिये! त्वदनुमन्याऽद्यप्रभृति मया सर्वा अपि स्त्रियस्त्यक्ताः अतस्त्वमपि दूरे भव?

त्य नृपाय प्रणाम करोति. हृष्टेन राज्ञा शालिभद्रो निजोत्सङ्गे गृहीतः, पर राज्ञः स्पर्शम-
सहमान· स व्याकुलीभूतः, तद्विज्ञाय भद्रया नृपप्रति कथित हे स्वामिन्नयमतीवसुकुमालः
शालिभद्रो भवत्स्पर्शेन व्याकुलीभवति, अत एन मुंचत ? अथ नृपेण मुक्तोऽसौ तूर्णं निज-
सप्तमभूमौ गत· ।

अथ भद्रया राजा भोजनार्थं निमन्त्र्य तत्र स्थापितः, ततोऽसौ श्रेणिकस्तस्य गृहाङ्ग-
णे स्नानं कर्तुं लग्नः, इतो राज्ञः कराङ्गुलित एका मणिमुद्रिका निःसृत्य गृहकूपिकायां पति-
ता. तदा राज्ञा भद्रायै प्रोक्त भो भद्रे ममैका मणिमुद्रिका कराङ्गुलितो निःसृत्यास्यां कूपि-
कायां पतितास्ति, ततस्ता निष्कास्य मम पुन· समर्पय ? तदैका भद्रादिष्टा दासी राजानं
कूपिकापार्श्वे समानीय वदति, हे स्वामिन् कूपिकास्थेष्वेतेष्वाभरणेषु भवन्मुद्रिका सम्यक्
समुपलक्ष्य यूयं स्वीकुरुत ? तदा तस्यां कूपिकायाममूल्यमाभरणसमूह निरीक्ष्य विस्मि-
तो राजा कथमपि निजमुद्रिका समुपलक्ष्य गृहीतवान् अथ चमत्कृतो राजा दासीप्रति पृ-
च्छति भो दासि ! एतावतीमान्याभूषणानि कस्य सति ? दास्योक्तं हे स्वामिन् एतत्सर्वं इ-

त्वा स्वायुःक्षये सर्वार्थसिद्धिविमाने देवत्वं प्राप्तौ; ततश्च्युत्वा नरभवं प्राप्य तौ मोक्षं यास्य-
तः, एवंविधं सुपात्रदानमाहात्म्यं श्रुत्वा तद्विषये भव्यैर्यतितव्यं ॥ इति सुपात्रदाने शालिभ-
द्रकथा संपूर्णा ॥ अथ पंचविंशतितमषड्विंशतितमप्रश्नोत्तरमाह—

गाथा—पसुपंखीमाणुसाणं । बाले जोवि हु विछोहइ पावो ॥ सोअणवच्चो जायइ । अ-
ह जायइ तोवि णो जीवइ ॥ ४१ ॥ व्याख्या—यः पुमान् पशुपक्षिमानुषाणां बालानां वि-
छोहं वियोगं कारयति, पुनर्योऽतिपापी भवति, सोऽनपत्यो जायते, अर्थात्तस्याऽपत्यानि न
भवंति, अथ चेद्भवंति तथापि नो जीवंति. यथा ऋद्धिवासनगरे वर्द्धमानश्रेष्ठिनः पुत्रो देदा-
ख्योऽनपत्यो बहुदुःखितश्च जातः ॥ ४१ ॥ गाथा—जो होइ दयापरमो । बहुपुत्तो गो-
यमा भवे पुरिसो ॥ व्याख्या—यः पुरुषः परमदयावान् भवति, स पुरुषो हे गौतम बहु-
पुत्रको भवति, तस्य पुरुषस्य बहवः पुत्रा जायंते. यथा पूर्वोक्तवर्द्धमानश्रेष्ठिनो वृद्धपुत्रस्य दे-
सलस्य बहवः पुत्रा जाताः ॥ अथ तयोर्देसलदेदयोः कथामाह—

ऋद्धिवासाख्ये नगरे वर्द्धमानाभिध एको वणिक् वसति, तस्य द्वौ पुत्रावभूतां. तयोरे-

अथ धन्नस्तत उत्थाय शालिभद्रपार्श्वे गत्वा तमपि प्रतिबोध्य तेन सह श्रीश्रेणिकराजकृतमहोत्सवः श्रीवीरप्रभुपार्श्वे दीक्षां जग्राह. एवं तौ द्वावपि कृतपक्षाष्टमदशमपक्षमासोपवासतपसौ क्रमेणातीव दुर्बलौ जातौ. क्रमेण विहरतौ तौ श्रीवीरप्रभुणासह राजगृहनगरे प्राप्तौ. तप पारणके च भिक्षावसरे तौ श्रीवीरपार्श्वेऽनुज्ञार्थं प्राप्तौ. तदा श्रीवीरेण शालिभद्रायोक्तं भो शालिभद्रमुने अद्य तव मातुर्हस्तेन पारणकं भविष्यति. अथ तौ क्रमेण भद्राया गृहे समागतौ, परं तत्र श्रीवीरप्रभुवंदनार्थं गमनोत्सुकैः कैरपि तौ नोपलक्षितौ भिक्षार्थं न निमंत्रितौ च. ततः पश्चाद्वलितौ तौ यदा नगरप्रतोल्या समागतौ तदा शालिभद्रस्य पूर्वभवमात्रा धन्नया नगरांतरागच्छंत्या तौ दधिदानपूर्वकं प्रतिलाभितौ, तद् गृहीत्वा तौ श्रीवीरसमीपे समागत्याऽकथयतां, हे भगवन् भवदुक्तमद्य न जातं, तदा श्रीवीरेणोक्तं भो शालिभद्र! ययाऽभ्मीर्या युष्मभ्यं दधिदानं दत्तं, सा शालिभद्रस्य पूर्वभवमातैवास्ति. अथ तौ द्वावप्यनशनं विधाय वैभारगिर्युपरि स्थितौ, तदनंतरं परिवारसहिता द्वात्रिंशद्वधूभिश्च परिवृता भद्रा तत्र वैभारगिरौ गत्वा ताभ्यां वंदनां कृत्वा स्वगृहे गता. तौ द्वावपि अनशनं कृ-

रोषि? देवदानवव्यंतरा अपि कृतं कर्म दूरीकर्तुं समर्था न भवंति. तवांतरायकर्म विद्यते, अ-
तस्तव भाग्ये पुत्रो नास्ति, तेनाहं ते कथं पुत्रं यच्छामि? देदेनोक्तं चेत्त्वं पुत्रं मे नो दास्य-
सि तदाहं तव प्राणहत्यां दास्यामि. तदा यक्षेणोक्तं तव पुत्रो भविष्यति परं स शीघ्रं मरि-
ष्यति. इत्युक्त्वा स यक्षोऽदृश्यो जातः, अथ देदो निजगृहे समागत्य स्ववनितायै कथितवा-
न्, देववरदानात्तव पुत्रो भविष्यति. इत्युक्त्वा स किंचिद् हृष्टः किंचिच्च विषण्णः सन् पार-
णं कृतवान्. ।

अथ तद्दिवसादारभ्य तस्य भार्यायाः कुक्षौ गर्भसंभवोऽभूत्, पश्चान्नवभिर्मासैस्तस्याः
पुत्रो जातः, दशदिवसानंतरं स्वजनान् भोजयित्वा तेन तस्य पुत्रस्य तोला इति नाम प्रति-
ष्ठितं. ततोऽसौ देदः पुष्पफलयुतस्तं बालकं गृहीत्वा यक्षं पूजयितुं यक्षालये गतः, यक्षस्तु क-
पाटौ दत्वा स्थितः, तेन बहव उपायाः कृताः, परं कपाटौ नोद्घटितौ, ततो विषण्णोऽसौ प-
श्चाद्वलित्वा स्वभवने समागतः, अथ तस्यामेव रजन्यां स बालो मृतः, तस्य शोकेन देददे-
मत्यौ मूर्छया भूमाववपततां, तदा वृद्धे भ्राता देशलस्तावाश्वास्य तयोर्भोजनं कारयित्वा कथ-

को वृद्वो देमनाख्य. परमदयावान्, द्वितीयश्च देदाख्योऽनीवनिर्दय आसीत्. पित्रा द्वावपि परिणायितौ. देमलस्य देविनी नाम्नी भार्या देदस्य च देमत्यभिधा भार्या वर्त्तते देसलस्तु लक्ष्मीमुपार्जयति, धर्मं करोति सुखं च भुनक्ति एवं स समये समये त्रिवर्गान् साधयति. देदस्तु धर्मं मुक्त्वा केवलमर्थमुपार्जयति सुखं च भुंक्ते. अथ क्रमेण देसलस्य बहवः पुत्राः संजाता, ते चातीवमनोहरा गुणवतश्च बभूवुः, एवं सा देविनी निजपुत्रान् लालयति निजोत्संगे च स्थापयति. एवं ता निजपुत्रान् लालयंतीं दृष्ट्वा देमती निजहृदये चिंतयति अरे ममैकोऽपि पुत्रो नास्ति, निजभर्त्तारं देदप्रति च सा कथयति अरे आवयोः पुत्रसुखं नास्ति. यत उक्तं—गेहंपि तं मसाणं । जत्थ न दीसंति धूलिधूलरिया ॥ उल्लत पडत रडवडंतो । दोतिन्निति डिंभा पमोयकरा ॥ १ ॥ अतो हे स्वामिन् कमपि पुत्रोत्पत्त्युपायं कुरु? अथ तद्वचसा देदेन सत्यवादिनामा यक्ष आराधितः, तं पूजयित्वा स्वयं चोपवासं कृत्वा तत्र स्थितः, कथितं च तेन तस्मै भो यक्ष यदि त्वं मे पुत्रं दास्यसि तदैवाहमितो गमिष्यामि एवमेकादशमे उपवासे स यक्षः प्रत्यक्षीभूय तमप्रत्येवमवादीत्, हे देद! त्वं ममोपर्येव कथं कष्टं क-

दनेनेदं कर्म कृतमिति. तद् ज्ञात्वा क्षत्रियेण हतोऽसौ निहूणो मृत्वा नरकं गतः, विहूणस्तु भ्रातुर्मरणं श्रुत्वा वैराग्यादनशनं विधाय सौधर्मे सुरो जातः, ततश्च च्युत्वा तव गृहे स देशलनामायं तव पुत्रोऽभूत्, निहूणजीवश्च नरकान्निःसृत्याऽयं तव देदाभिधो द्वितीयः पुत्रोऽभूत्, परं पूर्वभवे पशुपक्षिबालानां वियोगकरणादत्राऽपुत्रकोऽयं जातः, देशलेन च तृषार्त्तानां क्षुधार्त्तानां च दया कृता, तेनायं च सपुत्रको जातः ।

इति गुरोर्वचांसि श्रुत्वा जातजातिस्मरणो देसलो निजपूर्वभवं दृष्ट्वा सम्यक्त्वमूलं श्राद्धधर्मं च प्रतिपद्य क्रमेण च दीक्षां गृहीत्वा तपः कर्त्तुं लग्नः, अथ स विद्याचारणमुनिर्नभोमार्गेण गतः, स देसलमुनिरप्यनशनं विधाय मृत्वा च प्रथमे देवलोके देवो जातः, उक्तंच—जीवदया जिणवर कही । जे पालें नरनारी ॥ पुत्र हुवे सूरा सबल । तेहने रंगमोझारि ॥ ॥ १ ॥ इति देसलदेदयोः कथा समाप्ता. ॥ अथ सप्तविंशतितमं प्रश्नोत्तरमाह—

गाथा—जो असुयं भणइ सुयं । सो बहिरो जायए पुरिसो ॥ ४२ ॥ व्याख्या—यः पुरुषोऽश्रुतमपि किंचिन्मया श्रुतमिति कथयति स पुरुषो बधिरो जायते ॥ ४२॥ गा-

यति भो भ्रात ! इमे मदीया पुत्रास्त्वदीया एव ज्ञातव्याः, इत्यादि कथयित्वा तेन तयोः शोको दूरीकारितः,

इतस्तस्मिन्नवसरे कश्चिद्विद्याचारणश्रमण आकाशमार्गे गच्छंस्तयो रुदनं श्रुत्वा तत्रागत, सर्वैरपि स वंदितः, कृपिणापि तेभ्यो धर्मलाभो दत्तः, तत उपदेशदानानंतरं मुनिना देदाय कथितं त्वं शोकं त्यज? धर्मं च भज? धर्मेण सर्वमपि शुभं भविष्यति. उक्तं च—
धम्मेण कुलि पसूयस्स तुल्ला । बुद्दि विसाला धवला य कित्ति ॥ पुत्ता विणीया घरणी सुरूवा मणिच्छिय लब्भइ सव्वमेव ॥ १ ॥ अथ श्रेष्ठी मुनये पृच्छति हे भगवन् एताभ्या द्वाभ्यामपि मत्पुत्राभ्या पूर्वभवे किं कर्मोपार्जितमस्ति? तत्कथ्यताम्? ततो गुरुः कथयति अस्मिन्नेव नगरे इतस्तृतीये भवे विहूणनिहूणाभिधौ द्वौ कुलपुत्रावभूतां, तयोरेको वृद्धभ्राता धर्मवान् दयावांश्च वर्तते. द्वितीयो भ्राता वनमध्ये गत्वा मृगाणां बालकान् वियोगयति, पुनर्हंसाना शुकानां च बालकान् पंजरे क्षिपति, पुनरन्यस्मिन् ग्रामे च गत्वा मनुष्यपुत्राणां क्रयविक्रयं करोति. अथैकदा तेन कस्यचित्क्षत्रियस्यैकः पुत्र उत्पाटितः, क्षत्रियेण तद् ज्ञातं य-

त्कर्म कृतं, तस्य तत्कर्मैंडोऽपि दूरीकर्त्तुं समर्थो न भवति. कृतं कर्म स्वयमेव प्राणी भुनक्ति. तत् श्रुत्वा गुणदेवः पृच्छति भो भगवन् अयं पुत्रः केन कर्मणा बधिरांधो जातः? तन्मयि कृपां निधाय कथयत? तदा गुरुर्वदति.

अस्मिन्नेव नगरे वीरमनामैकः कुटुंब्यवसत्. परं सोऽधर्मी कूटभाषी परनिंदां परदोषं च वदति, कस्यचिच्छिरसि कूटं कलंकं ददाति. अथैको सीमान्धकराजा तस्य नगरस्य स्वामिनो वैरी वर्त्तते, ततो लोकास्तस्माद्राज्ञो भयं प्राप्नुवंति. इतः कौचिद् द्वौ पुरुषावेकांते परस्परं किंचिन्मंत्रमालोचयतः, तदा वीरमस्तौ दृष्ट्वा तलारक्षपार्श्वे गत्वा कथयति यदेतौ द्वौ पुरुषौ सीमान्धकराजानमाकारयतः, तदा तलारक्षेण तौ द्वौ पुरुषौ बंधयित्वा राज्ञोऽग्रे स्थापितौ. राज्ञा ताभ्यां पृष्टं युवाभ्यां किं मंत्रमालोचितं? तदा ताभ्यामुक्तं भो स्वामिन् आवाभ्यां किंचिद्गृहस्य कार्यमालोचितं, अन्यत् किमपि मंत्रं न कृतं; परं दुष्टेन वीरमेणोक्तं स्वामिन्नेतावसत्यं वदतः, ततो राज्ञा वीरमस्य वचनं सत्यं मत्वा तौ दंडितौ. अथैकदा पुनर्ग्रामादागच्छतः कस्यचित् श्रेष्ठिनो मार्गे स वीरमो मिलितः, तदा तं वीरमंप्रति श्रेष्ठिना प्रोक्तं अस्ति

था—अदिठं चिय दिठ्ठं । जो किर जाणिज्ज धम्मनिरविख्खो ॥ सो जच्चंधो जायइ । गोयम नियकम्मदोसेण ॥ ४३ ॥ व्याख्या—यः पुरुषोऽदृष्टमपि वस्तु मया दृष्टमिति कथयति, यश्च पुनर्धर्मनिरपेक्ष धर्मापेक्षया रहितं वचनं किलेति निश्चयेन जानाति, स पुरुषो हे गौतम! निजकर्मदोषेण जात्यंधो जायते ॥ ४३ ॥ द्वयोरुपरि एकामेव कथामाह—महेंद्रपुरे गुणदेवनामा श्रेष्ठी वसति, तस्य गायत्री नाम्नी भार्या, तयोर्बहुकालानंतरं पुत्रोऽभूत्, परं स स्वकर्मयोगेन बधिरोंधश्च जातः, पित्रा तस्य नाम न कृतं, तेन कश्चित्तं बधिर इति कथयति, कश्चिच्च तं अंध इत्यपि कथयति एवं द्वाभ्यां नामभ्यां स प्रसिद्धो जातः, पित्रा मंत्रयंत्रतंत्रादयो बहव उपचारास्तस्य कृते कारिताः, परं स मुखेन न किंचिदपि ब्रूते, न च कर्णाभ्यां किंचिदपि शृणोति तदा तस्य पितरौ चिंतयतो यदावाभ्यां पूर्वजन्मनि किं पापं कृतं येनावयोरीदृशो ऽपराधः पुत्रो जातः! इतस्तत्र कश्चिद् ज्ञानी गुरुर्वनमध्ये समवसृतः, तं वंदितुं स गुणदेवश्रेष्ठी परिवारयुतो वने गतः, वंदित्वा चाग्रे स स्थितः, तदा गुरुस्तंप्रति कथयति भो गुणदेव! त्वं निजं बधिरांधं पुत्रं दृष्ट्वा कथं हृदि दुःखं करोषि? येन प्राणिना य-

म्य । तथापुण्यप्रकाशकं ॥ रोहिण्याश्च कथायुक्तं । रोहिणीव्रतमुच्यते ॥ १ ॥ श्री चंपानग-
र्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मीनाम्नी राज्ञी सुशी-
ला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः संति. अष्टानां पुत्राणामुपर्येका रोहिणीनाम्नी पु-
त्री वर्त्तते. सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती च जाता.

अथ क्रमेण सा यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिंतयति, नूनमियं रोहि-
णी वरयोग्या जातास्ति. अथ राज्ञा स्वयंवरमंडपं मंडयित्वा सर्वेऽपि राजकुमारा आकारि-
ताः, तेऽपि च मंडपे समागत्य स्थिताः, तस्मिन्नवसरे रोहिण्यपि स्नानं विलेपनं च कृत्वा
क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय, मुक्ताभरणैरलंकृता साक्षाद्देवीव शिबिकायां स्थित्वा सखी-
भिः परिवृता तत्रागता. अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां ना-
मगोत्रबलवयोयशःप्रभृतीनां वर्णनं करोति. अथ तयाऽन्यान् सर्वानपि राजकुमारान् वर्ज-
यित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कंठे च तया निजव-
रमाला क्षिप्ता; ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तं च तया सह विवाह्य त-

मम गृहे समाधिः? तदा तेन छुटेन वीरमेणोक्तं तव गृहे कामदेव. प्रत्यहं याति तव वनि-
ता च भुक्ते. इदृश वचनं श्रुत्वा कुपितेन तेन श्रेष्ठिना राज्ञोऽग्रे स वृत्तांत उक्तः, तदा क्रुद्धेन
राज्ञा वीरमस्य सर्वस्वं गृहीतं. एवं बहुपापकर्त्तासौ वीरमः कदाचित्केनचित् क्षत्रियेण मा-
रितो मृत्वाऽत्र तव गृहे जन्माधवधिरो जातोऽस्ति. अतोऽप्यय बहु संसारं भ्रमिष्यति ता
वार्त्ता श्रुत्वा तस्य पितरौ धर्मं कर्त्तुं लग्नौ अथ स जन्माधवधिरोऽपि बहुदुःख भुक्त्वा मृ-
त्वा च दुर्गतिं गतः, अतः केनापि परनिंदा न कार्या, परस्य च कलंको न देयः ॥ इति वी-
रमकथा समाप्ता ॥ अथैकोनत्रिंशत्तमं प्रश्नोत्तरमाह—

गाथा—उच्छिठमसुदरयं । भत्त तह पाणियं च जो देइ ॥ साहूण जाणमाणो । भुत्तं-
पि न जिज्जए तस्स ॥ ४४ ॥ व्याख्या—यो जीव उच्छिष्टमसुदरं च भक्त तथा पानीय जा-
नन् सन् साधुभ्यो ददाति, तस्य भुक्तमप्यन्न न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति; य-
था श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गंधाभिधाना कु-
ट्टिनी जाता साधोः कटुतुंबकाहारदानात्. ॥ ४४ ॥ रोहिणीकथा चेयं—श्रीवासुपूज्यमान-

त्युक्त्वा रोहिण्युत्संगस्थं तस्या लघीयांसं पुत्रं लोकपालाख्यं राजा निजहस्तेन भूमाववपात-
यत्, तदा तत्रस्थाः सर्वे जनास्तं तथा पतंतं दृष्ट्वा हाहारवं कर्त्तुं लग्नाः, परं रोहिण्या हृदि
किंचिन्मात्रमपि दुःखं न जातं. इतस्तं पतंतं बालकं नगराधिष्ठितेन देवेन धृत्वा सिंहासने
स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः संतो विचारयामासुः, नूनमियं रोहिणी धन्यैव
या दुःखस्य वार्त्तामपि न जानाति.

इतस्तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुंभस्वर्णकुंभनामानौ द्वौ शिष्यौ ज्ञानवंतौ तत्र स-
मागतौ, तदा राजा परिवारयुतस्तौ वंदितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानंतरं रा-
ज्ञा पृष्टं भो भगवन् अनया रोहिण्यैवंविधं किं तपः कृतं, येनेयं दुःखस्य वार्त्तामपि न जा-
नाति. एतस्या अष्टौ पुत्राश्चत्वारश्च पुत्र्यो जाताः संति, तथा ममापि तस्या उपर्यतीवस्नेहो
वर्त्तते, अतस्तस्याः कथां युवां कृपां विधाय कथयतं. तत् श्रुत्वा गुरुः कथयति अस्मिन्नेव न-
गरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्यास्ति, तस्या एका दुर्गंधा ना-
म्नी पुत्री, सा कुरूपा दुर्भगा च जाता. एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो प-

तो भोजनवस्त्राभरणतांबूलादि गृहीत्वा स्वस्वगृहे गता॰, अशोककुमारोऽपि तत्र कतिचिद्दि-
नानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुत प्रस्थाय नागपुरसमीपे समागतः, तदा
वीतशोकराज्ञा तस्य पुरप्रवेशमहोत्सव॰ कृत॰, कुमारोऽपि रोहिण्या सह विषयसुखानि भु-
नक्ति अथैकदा शुभे दिनेऽशोककुमाराय राज्य दत्वा वीतशोको राजा दीक्षा गृहीतवान्,
ततोऽशोकराजा सुखेन राज्यं पालयति. क्रमेणाशोकराज्ञोऽष्टौ पुत्राश्चतस्रश्च पुत्रिका जाताः,
अथैकदा रोहिण्या सहितो राजा सप्तम्या भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्संगे
धृत्वा क्रीडयति तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृत, सा स्त्री रुदती विला-
पाश्च कुर्वती तस्मिन् मार्गे समागता. ता दृष्ट्वा रोहिण्या राज्ञे पृष्ट भो महाराज! किमिदं
नृत्य? राजा जगाद हे प्रिये त्व साहकार वचन मा ब्रूहि? रोहिण्योक्त स्वामिन्नहमहकार
न करोमि, एवविध नृत्य मया कदापि न दृष्ट, अतोऽह पृच्छामि.

तदा राज्ञोक्तमेतस्या॰ स्त्रियः पुत्रो मृतोऽस्ति, अत एवेय रुदन करोति. रोहिण्योक्तं हे
स्वामिन्नस्या रुदन केन शिक्षितं भवेत्? तत् श्रुत्वा राज्ञोक्त तवाप्यहं रुदन शिक्षयामि, इ-

गाली जाता, ततो मृत्वा गृहगोधा, ततो मुषिका, ततो जलौका पश्चाच्च गणिका जाता, अ-ष्टमे भवे चांमाली, नवमे भवे रासभी, दशमे भवे च गौर्जाता. तस्मिन् भवे वनमध्ये गु-रुमुखान्नमस्कारमंत्रं श्रुत्वा तस्य प्रसादान्मनुष्यभवे दुर्गंधा नाम्नीयं तव पुत्री बभूव; तत् श्रुत्वा दुर्गंधाया जातिस्मरणं समुत्पन्नं.

तदा दुर्गंधा निजपूर्वभवं दृष्ट्वा करौ च योजयित्वा पृछति हे भगवन् एतस्माद्दुःखादहं कथं निस्सरामि? तत्कथ्यतां. तदा मुनिभिरुक्तं त्वं दुःखभंजनं रोहिण्या व्रतं कुरु? तयो-क्तं हे भगवन्! केन विधिनाहं तद्व्रतं करोमि? मुनिनोक्तं शृणु? रोहिणीनक्षत्रदिने श्रीवा-सुपूज्यजिनबिंबं पूजयित्वा सप्तमासाधिकं सप्तवर्षं यावत् उपोषं कुरु? एवं शुभध्यानयुतत-पःप्रभावात्तव शुभं भविष्यति; पश्चाच्च त्वया तत्तपउद्यापनं विधेयं, येन तव सर्वं दुःखं या-स्यति, सुगंधराजवत्. तत् श्रुत्वा दुर्गंधा मुनिंप्रति पृछति, हे भगवन् तस्य सुगंधराजस्य वृ-त्तांतं मयि कृपां विधाय कथयत? तदा मुनिर्वदति—

सिंहपुरे सिंहसेनो राजा, तस्य कनकप्रभाभिधाना राज्ञी वर्त्तते; तस्य दुर्गंधाख्यः पु-

गिजपति. तदा पित्रैक मार्यमाण श्रीषेणाज्ञि त चौरं मोचयित्वा तस्या दुर्गायाः स स्वामी कृतः, सोऽपि गवी दुर्गंधा त्यक्त्वा नष्टा गतः, तदा श्रेष्ठी विषाद करोति. विलपन्तीं पुत्रीमति श्रेष्ठी कथयति हे पुत्रि! त्वं विलाप मा कुरु? गृहद्वारि स्थिता दानं देहि? धर्म च कुरु? येन तव दुष्कर्मदोषः प्रलीयते. अथ सा तदंगीकृत्य प्रत्यहं दानं ददाति.

अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वंदित्वा तस्याः कन्यायाः स्वरूपं पृष्टं, गुरुर्भणति गिरिनारनगरे पृथ्वीपालाभिधो राजासीत्, तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन्न् समये कश्चिन्मासक्षपणपारणकः सागरनामा मुनिः समागच्छति, तं मुनिं दृष्ट्वा राज्या विचारितं यदहमस्मै मुनये प्रासुकमाहारं ददामि. एवं विचार्य तया गृहे समागत्य तं मुनिमाकार्य तस्मै कटुतुम्बकशाकं दत्तं; मुनिना च तेनाहारेण पारणकं कृतं, तद्भक्षणाच्च मुनिः पञ्चत्वं प्राप्तः. शुभध्यानाच्च स देवलोके देवोऽभूत्. तां वार्तां ज्ञात्वा राज्ञा स्वदेशाद्राज्ञी निष्कासिता. पश्चात् सा राज्ञी मृत्वोष्ट्रिका जाता, पुनश्च सा मृत्वा कुर्कुटी भूता; पश्चात् शृ-

यत? तदा श्रीतीर्थंकरेण भणितं त्वं सप्तमासाधिकानि सप्तवर्षाणि यावद्रोहिणीतपः कुरु? पश्चाच्च तस्य तपस उद्यापनं कुरु? तत् श्रुत्वा तेन रोहिणीतपः कृतं, यस्य प्रभावात् स सुगंधोऽभूत.

इति कथां श्रुत्वा सा दुर्गंधा रोहिणीतपो विधिपूर्वकं कृत्वा सुगंधा जाता. पश्चान्मृत्वा सा देवोऽभूत्; ततश्च्युत्वा चंपायां श्रीवासुपूज्यस्य मघवपुत्रस्य पुत्रिकेयं रोहिणीनाम्नी तव राज्ञी जाता; पूर्वभवकृततपःप्रभावादियमाजन्म यावद्दुःखं न वेत्ति. पुनर्हे अशोकराजेंद्र अस्या उपरि तवाधिकः स्नेहः कुतो वर्त्तते? तस्यापि कारणं शृणु? सिंहसेनराज्ञा सुगंधपुत्राय राज्यं दत्वा स्वयं च दीक्षां गृहीत्वा श्रीजिनधर्मं पालयित्वा पुष्कलावतीविजये पुंडरीकिण्यां नगर्यां विमलकीर्त्तिराज्ञः पुत्रोऽर्ककीर्त्तिनामाभूत्, क्रमेण स चक्रवर्त्ती जातः, राज्यं भुक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुःक्षये च मृत्वा द्वादशमे देवलोकेऽच्युतेंद्रोऽभूत्. ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिण्याश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद्युवयोः परस्परमधिकः स्नेहो जातः॥ अथ त्वं पुत्राणां कारणं शृणु?

त्रोऽनून्, स क्रमेण यौवन प्राप्तः, परं कस्यापि मनसि स न रोचते एकदा श्रीपद्मप्रनस्ती-र्थकरस्तत्रागतः, त पद्मप्रन वंदित्वाऽसौ निजडुर्गंधत्वकर्मणो विपाकं पृछति तदा श्रीसर्वज्ञ-प्रभु· कथयति. नागोरनगराद् घादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपर्येका शिला वर्त्त-ते, तत्रैको मुनिर्मासक्षपणादि तपः करोति, तत्तप प्रनावाछ्याखेटकस्याखेटकं निष्फलं या-ति, तदा स लुब्धकस्तस्य मुनेरुपरीर्ष्यां करोति.

एकदा स ऋषिः पारणार्थं ग्राममध्ये प्राप्त·, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्नि प्रज्वाल्य सा शिलाऽतीवोष्णा विहिता. अथ स ऋषिः पारणक विधाय शिलाया नपरि स्थित., बहुतापात्स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्ष गतः, अथ ऋषिघातात्स लु-ब्धक· कुष्टी जातः, पश्चान्मृत्वा स सप्तमीं नरकावनीं गत्वा, ततो मत्स्यो नूत्वा गोपालो जात , पर स दरिद्री नूत·, केनचिद्वणिजा च स नमस्कार शिक्षित·, पश्चाद्दावानलमध्ये ज्वलितः, नमस्कारप्रनावाच्च त्वं राज्ञ पुत्रोऽयं डुर्गंधाख्योऽनू·, तत् श्रुत्वा जातिस्मरण प्रा-प्य स प्रभुं पृछति, हे नगवन्न कथमहमथ सुगधो नवामि ? तस्योपायं कृपा विधाय कथ-

गुणवत्यश्चासन. एकदा वनमध्ये क्रीडंत्यस्ता गुरुभिर्दृष्टाः, चालापिताश्च भो पुत्र्यो यूयं धर्मं कुरुध्वं? युष्माकमायुरेकदिनप्रमाणमेव विद्यते, ताभिरुक्तं हे भगवन् एकदिनमध्ये को धर्मो भविष्यति? तदा गुरुभिरुक्तं यूयमद्य शुक्लज्ञानपंचमीतपः कुरुध्वं? अद्यैव दिने पंचम्या नुपवासं कृत्वा गृहे गत्वा देवपूजां च कृत्वा पुण्यस्यानुमोदनां कुरुध्वं? ताभिरपि गृहे गत्वा तथैव कृतं. अथ तस्मिन्नेव रात्रौ विद्युत्पातात्ताश्चत्वारोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च च्युत्वा तवैताः पुत्र्यः संजाताः, अथैताः सर्वा वार्त्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुंभस्वर्णकुंभगुरू नत्वा निजगृहे समागतः, कियत्कालानंतरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः, उक्तंच—रोहिणीतपपंचमीतप। गुरुआए तप जाणी ॥ दुखित होय करी सुख हुवे। बोले केवलनाणी ॥ १ ॥ इति रोहिणीअशोकराजकथा ॥ अथ त्रिंशत्तमं प्रश्नोत्तरमाह—

गाथा—महुघाय अग्गिदाई । अंकं वा जो करेइ पाणीणं ॥ बालारामविणासी । कुट्ठी सो जायइ पुरिसो ॥ ४५ ॥ व्याख्या—यो नरो मधुमक्षिकाया आलयं पातयति, पुन-

मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः परं ते दरिद्रिणः, एकदा पाटलीपुत्रनगरे ते सप्तापि भ्रातरो भिक्षार्थं गच्छति, तदा वाटिकामध्ये कश्चिद्राजकुमारः कदर्पावतारः क्रीडति. त दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबांधवान् वक्ति, भो भ्रातरो विधिना कियदतर कृतमस्ति अयं राजकुमारो मनोवाछित सुख भुनक्ति, वय च भिक्षार्थं गृहे गृहे भ्रमाम , तदेकेन भ्रात्रोक्त अस्मिन् विषये कस्योपालभो दीयते ? पूर्वभवेऽस्माभिः पुण्य न कृत, अनेन राजकुमारेण च सुकृतं कृतं, अतोऽसौ सुख भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैर्जीवदयायुत धर्म पालयित्वा प्राते गुरोः पार्श्वे दीक्षा गृहीता, मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन्, तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लकविद्याधरोऽभून्, स निरतर नदीश्वरद्वीपे शाश्वतीर्जिनप्रतिमा अपूजयत्, धर्मं चाऽकरोत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः, ततश्च च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव. अथ चतसृणा पुत्रीणा सबधं शृणु ?

वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः पुत्रिका अभवन्, ता महारूपवत्यो

वाटिकामध्ये गत्वा सुकोमलां वनस्पतिं छेदयति, तदा वनपालस्तं बध्ध्वा कुट्टयामास. ततो वनपालेन राज्ञोऽग्रे गत्वा कथितं हे स्वामिन् युष्माकं वाटिका गोशलेन विनाशिता. तदा राज्ञा तस्य गोशलस्य हस्तौ छेदितौ, एवं स दुःखी सन् बहुविधं पश्चात्तापं करोति. उक्तंच—
मायबापवडातणी। सीख न माने जेय॥ कर्मवशें दुखिया थका। पछी पछताये तेह॥१॥
अथ स गोशलो मृत्वा तत्रैव पद्मश्रेष्ठिनो गृहे पुत्रत्वेनोत्पन्नः, गोरा इति तस्य नाम दत्तं. तस्य जन्मत एव गलत्कुष्टो रोगो जातः, पित्रा बहून्यौषधानि कारितानि, परं प्रत्युत तस्य रोगो वृद्धिं प्राप. एकदा तत्र पद्मसाराभिधो मुनिः समागतः, तं वंदितुं सर्वेऽपि नगरलोका गताः, पद्मश्रेष्ठ्यपि तं वंदितुं गतः, ऋषिणोक्तं जीवः कृतकर्मवशात्सुखी च दुःखी च भवति. अथ तस्मिन्नवसरे श्रेष्ठिनोक्तं हे भगवन् अनेन मम पुत्रेण किं पापकर्म कृतमस्ति? ऋषिर्वक्ति हे श्रेष्ठिन्! स पूर्वभवेऽत्रैव गोविंदगौर्योगोशलाख्यः पुत्रोऽभूत्, तेन पूर्वभवे दवो दत्तः, वृक्षाश्छेदिताः, मधुमक्षिकालयः पातितः, पशवोंकिताः, एवं बहुविधं पापकर्म कृत्वा मृत्वा सोऽयं तव कुष्टरोगी पुत्रो जातः, इति श्रुत्वा पद्मश्रेष्ठिना पुत्रंप्रति कथितं हे पुत्र पू-

यो दावानल ददाति पुनर्य प्राणिना गवादीनामंकं चिन्हं करोति, लघुआरामान् वनवृक्षान् विनाशयति, त्रोटयति मोटयति तथा पुष्पादीनि चुटयति स पुरुषो जवांतरे कुष्टी जवति, गोविंदपुत्रगोशलवत् ॥ ४५ ॥ अथ तस्य गोशलस्य कथामाह—

श्रीप्रतिष्ठानपुरे गोविंदनामा गृही वसति, तस्य जार्या गौरीति नाम्नी, तयो. पुत्रो गोशलाख्यो जात., पर स कुव्यसनी निर्दयश्चासीत्. एकदा स एकाकी वनमध्ये गत्वा यष्टिना मधुालय पातयामास, पुनः स दावानल दत्वा शशकादिजीवान् व्यापादयामास. पुनः स गोशलो वृषजादीन् पशून् अंकयति डज्ज ददाति, नवकिसलयान् वृक्षांश्च छेदयति उन्मूलयति च तस्यैतत्कार्येण रुष्टैर्लोकैस्तस्य पितुरुपालज्जो दत्तः, तदा पित्रा पुत्रमाहूय तस्य शिक्षा दत्ता, पर स तस्य शिक्षा न मन्यते, एवं स सर्वेषामुद्वेगजनको जातः, क्रमेण तस्य पितरौ देवीजूतौ. अथ स गोशलो निरंकुशहस्तीवडुच्छृंखलो वजूव.

एकदा स राज्ञो वनवाटिकाया गत्वा नारिंगादीनुन्मूलयितु लग्न., तदा तलारक्षेण बंधनपूर्वक त गृहीत्वा स राज्ञोऽग्रे मुक्त ,राज्ञा तस्य सर्वस्व गृहीत्वा मुक्तः, पुनरेकदा स राज्ञो

व. । अथ तस्मिन्नेव नगरे कश्चिद्धनाख्यः श्रेष्ठी वर्त्तते, तस्य गृहे धीरूजीवो मृत्वा धनश्रीनाम्नी पुत्रिका जाता, सा धनश्री रूपवती गुणवती यौवनवयः प्राप्य पूर्वस्नेहवशात्तं कुब्जं धनदत्तं भर्त्तारं वांछति. तस्य धनश्रेष्ठिनो द्वितीयाप्येका पुत्र्यासीत्, सापि कर्मवशात्कुब्जा वर्त्तते. एकदा तस्य गृहे एको नैमित्तिकः समागतः, तेन नैमित्तिकेन स्वनिमित्तज्ञानेन तस्मै धनश्रेष्ठिने कथितं गृहस्वामिन् यो नर इमां धनश्रियं परिणेष्यति स नगरश्रेष्ठी भविष्यति. अथेदृशीं वार्त्तां श्रुत्वा धनपालनामा कश्चिद्व्यवहारी धनश्रियं मार्गयामास. तदा तस्याः पित्रोक्तं वरं, इमां धनश्रियमहं तुभ्यं दास्यामि, कुब्जस्य धनदत्तस्य चेमां कुब्जां कन्यां दास्यामि. एवं द्वयोः कृते तेनैकमेव लग्नं गृहीतं. परं सा धनश्रीर्धनदत्तमेव वांछति, तेन तया धनश्रिया तन्मनोरथपूर्वकमेको यक्ष आराधितः, तदा संतुष्टेन यक्षेण तस्यै प्रोक्तं, लग्नसमयेऽहं सर्वेषां जनानां दृष्टिबंधं करिष्यामि, येन धनदत्तेन सह तव पाणिग्रहणं भविष्यति. तत् श्रुत्वा सा धनश्रीर्हृष्टा, यक्षश्चैवं तस्यै वरं दत्वाऽदृश्यो जातः, ततो लग्नदिने यक्षेण धनश्रियो धनदत्तेन सह संबंधः कारितः, कुब्जायाश्च धनपालेन सह संबंधः कारितः, ए-

वेऽन्वे त्वयैव कर्म कृतमस्ति इति श्रुत्वा स जातिस्मरणं प्राप, ततोऽसौ मुनिपार्श्वे निज-पातकं निदयित्वाऽनशनं गृहीत्वा मृत्वा च प्रथमदेवलोके देवोऽभूत् ॥ इति गोशलकथा संपूर्णा ॥ अथैकत्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—गोमहिस खरकरह । अइन्नारारोपणेण पीडेइ ॥ एएण पावकम्मेण । गोयमा सो भवे खुज्जो ॥ ४६ ॥ व्याख्या—यः पुरुषो वृषभमहिषखरोष्ट्राणामतिभारारोपणेन पीडयति, तेन पापकर्मणा हे गौतम स जीवः कुब्जो भवति, धनावहपुत्रधनदत्तवत् ॥ ४६ ॥ अत्र धनदत्तधनश्रियोः कथा यथा—भूमिमंडननगरे शत्रुदमनो राजा राज्यं करोति, तत्र नगरे धनाभिधः श्रेष्ठी, तस्य च धीरूनाम्नी वनिता वर्त्तते, स श्रेष्ठी भाटकेनाजीविका करोति तस्य गृहे बहुपोष्टिकोष्ट्रिकखरमहिषाणां समूहोऽस्ति, स लोभेन तेषामुपरि बहुभारं वाहयित्वा बहुभाटकं समर्जयति एकदा कश्चित्साधुस्तस्य गृहे आहारार्थं समागतः, तस्मै दानं दत्वा तेन शुभं कर्मोपार्जितं, प्रांते स स्वायुः पूर्णीकृत्य तस्मिन्नेव नगरे धनावहश्रेष्ठिनो गृहे धनदत्ताख्यः पुत्रोऽभूत्, परं स कुब्जो जातः, स धनदत्तो वाणिज्यकलायां कुशलो बभू-

हं कुब्जो ऽभूतः, इयं च मम भार्या धनश्रीरपि केन कर्मणा ममोपर्यधिकस्नेहवती जाता? पुनरस्माकं लक्ष्मीभोगसुखादिकं च कथं जातं? तत्कथयत? मुनिनोक्तं शृणु? पूर्वभवे युवां धनधीरूनामानौ स्त्रीभर्त्तारावभूतां. वृषभोष्ट्राद्युपर्यतिभाररभरणेन त्वं कुब्जो बभूव. पुनस्तस्मिन्नेव भवे त्वया साधवे दानं दत्तं, तन्माहात्म्यात्त्वया लक्ष्मीभोगाश्च लब्धाः, पूर्वभवस्नेहादस्मिन् भवेऽपि युवयोरधिकस्नेहः परस्परं बभूव. तां वार्त्तां श्रुत्वा स जातिस्मरणं प्राप्य सम्यक्त्वमूलं श्राद्धधर्मं च प्रतिपद्य निजगृहे गतः, ततो धर्ममाराध्य सुपात्रे च दानं दत्वा मृत्वा च स देवलोके देवोऽभूत्. ॥ इति धनदत्तधनश्रियोः कथा ॥ अथ द्वात्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—जाइमउ उमत्तमणो । जीवो संधुणेइ जो कयग्घो य ॥ सो इंदभूइ मरिउं । दासत्तं वच्चए पुरिसो ॥ ४७ ॥ व्याख्या—यः पुरुषो जातेः कुलस्य मदं करोति, पुनर्य उन्मत्तमना भवति, यश्च परनिंदामात्मप्रशंसां च करोति, स पुरुषो नीचगोत्रकर्मोपार्ज्य इह इंद्रभूते मृत्वा दासत्वं प्राप्नोति, पुनर्यो नरो जीवानां क्रयविक्रयं करोति, पुनः कृतघ्नो भवति

न तौ द्वावपि परिणीय ततो निर्गतौ. धनदत्तस्तु धनश्रियं दृष्ट्वा हृष्ट, परं धनपालो निजां कुब्जां स्त्रियं दृष्ट्वा मनस्यतीव दूनः, अथ धनपालो धनदत्तंप्रति वक्ति त्वयेयं या धनश्रीः परिणीता सा मामकीना भार्यास्ति, तव भार्या नास्ति, ततस्तां मम प्रतियच्छ, चेत्त्वं न दास्यसि तदाहं राज्ञोऽग्रे यास्यामि, इति परस्परं कलहं कुर्वतौ तौ राज्ञोऽग्रे गतौ राज्ञा तौ द्वावपि तयोर्गृहे प्रेषयित्वा धनश्रीराकारिता. पृष्टं च राज्ञा तस्यै, हे धनश्रि अयं विनिमयः केन कृतः? त्वं सत्यं वद? तदा धनश्रियोक्तं हे राजन्! मया यक्ष आराधितस्तेन च संतुष्टेनैव कृतमस्ति

तत् श्रुत्वा राज्ञा चिंतितं यद्दैवेन कृतं तदन्यथा नैव भवति इति विचार्य तयोः संबंधिन आकार्य राज्ञोक्तं योऽयमुदंतः समुद्भूतः स दैवेनैव कृतोऽस्ति, अत कैरपि रोषो नैव कार्यं, अथ तौ द्वावपि मनसि संतुष्टीभूय स्वस्वगृहे स्थितौ अस्मिन्नवसरे चतुर्ज्ञानधरो धर्मरुचिनामा मुनिस्तत्र समागतः, तदा सर्वेऽपि लोकाः सपरिवारास्तं वंदितुं गताः, गुरुणापि तेभ्यो धर्मदेशना दत्ता धर्मदेशनानंतरं धनदत्तेन गुरुभ्यः पृष्टं हे भगवन्! केन कर्मणा-

सचेलं स्नानं कथं न क्रियते? तत् श्रुत्वा स तं मार्गं त्यक्त्वाऽन्यमार्गे पतितः, तत्र मार्गे तु तस्य मातंगाश्चांडालाश्चापि सन्मुखमेव मिलिताः, तदा स कोपातुर आक्रोशवचनानि कथयितुं लग्नः, तत्क्षणमेव मातंगैर्मिलित्वा स गृहीतः, ततस्ते तं यदा मारयितुं लग्नास्तदा स भो मातंगाः अहं युष्माकं दासोऽस्मीत्यादि दीनवचनजल्पनतस्तैः स मुक्तः, पश्चात्सोऽज्ञानतपः कृत्वा मृत्वा च ज्योतिष्केषु देवत्वं प्राप.।

ततश्च्युत्वा पद्मखंडे नगरे कुंददंताभिधाया गणिकायाः कुक्षौ स मदनाख्यपुत्रत्वेनोत्पन्नः, अथैकदा स मदनो निजमनसि चिंतयति अहो मया किं पापं कृतं? येनाहं हीनजातिर्गणिकापुत्रो जातः, एवं यावत्स चिंतयति तावत्तत्र कश्चित्केवली गुरुः समागतः, स मदनस्तं गुरुं नत्वा पृच्छति हे भगवन् मया हीनजातित्वं कथं लब्धं? तदा ज्ञानी कथयति हे मदन! त्वया पूर्वभवे जातिमदो विहित आसीत्, पुनस्त्वया परनिंदाकरणादिपापमपि कृतमस्ति, अतः कारणात्त्वं गणिकापुत्रो जातोऽसि तत् श्रुत्वा मदनः प्राह हे स्वामिन् चेद्यूयं मां योग्यं जानीथ तर्हि मह्यं दीक्षां यच्छत? तत् श्रुत्वा केवलिना ज्ञानेन तं गणिकापुत्रं यो-

केनापि कृतमुपकारं नैव मन्यते, स पुरुषो दे इस्मूते मृत्वा दासत्वं लभते. अत्र ब्रह्मदत्तक- था—हस्तिनागपुरे सोमदत्तनामा पुरोहितो वसति, तस्य सोमदत्ता भार्या, तयोर्त्रलिभद्रना- मा पुत्रः, स जातिमदेन सर्वजनान् तृणवन्मन्यते, मार्गेऽपि जलच्छटा दत्वा चलति, स रा- जपुत्रभृत्यस्वपुत्रादिस्पर्शतोऽपि स्नानं करोति, पुनर्मातंगे दृष्टिपतिते सति स सचेलः स्नानं करोति; प्रायश्चित्तं च चिंतयति, अन्यजात्युपरि च द्वेषं वहति, केवलं स्वजातिमेव प्रशंसति एवमतिशौचकरणतः स पित्रोरुद्वेगकरः संजातः, लोकास्तं हसंति, एकदा तस्मै पितोक्तं भो पुत्र त्वं लोकव्यवहारं कुरु? जातेर्मदं च मा कुरु? एवमुक्तोऽप्यसौ तदमन्यमानो म- त्तहस्तिवच्चलति. एवं कियत्यपि काले गते सति तस्य पिता मृतः, तदा राज्ञाऽन्यः पुरोधाः कृतः, एवं स लोकविरुद्धाचरणेनात्रैव पदभ्रष्टोऽभूत्; सहास्येन लोकेनापि तस्य ब्रह्मदत्त इति नाम दत्तं. अथ क्रमेण स ब्रह्मदत्तो निर्धनः कृतघ्नश्च संजातः, ततोऽसौ वृन्तादीनां क्रयवि- क्रयं कृत्वा स्वाजीविकां करोति. अथैकदा यदा स मार्गे याति, तदा लोकैस्तस्य हास्यं कृ- त्वोक्तं, भो ब्रह्मदत्त! एतानि सर्वाणि तृणानि मातंगेन स्पृष्टानि संति, तर्हि अधुना त्वया

त्रा स गुरोः पार्श्वे समानीतः, तदा गुरुभिस्तंप्रत्युक्तं भो वत्स त्वं नियमं पालय? तेनोक्तमहं नियमं पालयितुं न शक्नोमि. अथ कतिचिद्दिवसानंतरं तस्य पिता मृत्वा देवोऽभूत्. अथ तस्य मनोरथस्य गृहे तत्कृपणत्वतः कोऽपि भिक्षुर्नायाति.

अथैकदा स एकाक्येव कंचिद्ग्रामंप्रति चलितः, मार्गमध्ये च तस्य चौरा मिलिताः, तैर्मारितोऽसौ मृत्वा दरिद्रकुले कस्यचिद्दरिद्रस्य पुत्रो जातः, तत्र च तस्य निष्पुण्यक इति नाम जातं. स निष्पुण्यको लोकानां पशूंश्चारयति, तथा जनानां भारं मस्तके वहति; एवं स सर्वेषां लोकानां सेवाकारकोऽभूत्; तथापि स स्वोदरं दुःखेन पूरयति. एकदा स द्रव्योपार्जनाय देशांतरे चलितः, मार्गे स वनमध्ये एकं षण्मुखदेवस्यालयं दृष्ट्वा धनप्राप्त्यर्थमुपवासपूर्वकं तं देवमाराधयामास. तदा सप्तमे दिवसे षण्मुखेन देवेनागत्य तस्मै भणितं, त्वमितः स्थानाद्याहि? तव भाग्यमध्ये लक्ष्मीर्नास्ति, तदा तेन निष्पुण्यकेन भणितमहमत्रैव तव स्थानाग्रे मरिष्यामि. इति तद्वचः श्रुत्वा देवेनोक्तं भो निष्पुण्यक! अत्र नित्यं ममाग्रे स्वर्णमयो मयूरो नृत्यं करिष्यति, एकां च स्वर्णमयीं पिच्छामत्र मोक्ष्यति, सा त्वया सर्वदा

य विज्ञाय तस्मै दीक्षा दत्ता ततोऽसौ दुष्कर तपस्तप्त्वाऽयुःक्षयेऽनशनं गृहीत्वा देवलोके देवत्व प्राप; क्रमेण च मनुष्यत्वमादाय दीक्षया कर्मक्षयं कृत्वा शुक्लध्यानवशेन स मोक्षे गत. ॥ इति मदनब्रह्मदत्तकथा ॥ अथ त्रयस्त्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—विणयहीणो चरित्तवज्जिओ । दानगुणविज्जओ य ॥ मणामाइदडजुत्तो । पुरिसो दरिद्दिओ होइ ॥ ४० ॥ व्याख्या—यः पुरुषो विनयरहितस्तथा चारित्रवर्जितो नियमरहितः, पुनर्दानगुणेन च रहितो भवति, तथा त्रिदंडयुक्त इति मनसाऽऽर्त्तध्यानं रौद्रध्यान च चिंतयति, वचसा दुर्वचन ब्रूते, कायया चापि कुबुद्धिरूपा चेष्टा यः करोति स पुमंपो मृत्वा दरिद्री भवति निष्पुण्यकत्वत् ॥ ४० ॥

यथा हस्तिनागपुरेऽरिमर्दनो राजा राज्य करोति, तत्रैव सुबुद्धिनामैकः श्रेष्ठी वसति त स्य वसुमती नाम्नी भार्या तस्या मनोरथाख्यश्च पुत्र', स बालः पितृभ्यां शनैर्मनोरथैर्वर्द्ध्यते, अथैकदा पिता तस्य पुत्रस्य शिक्षा ददाति, हे पुत्र ! त्व देवगुरुभ्यः प्रणामं कुरु? परं स कुबुद्ध्या न करोति, वृद्धाना प्रति त्वं विनयं कुर्वित्युक्तोऽपि स विनयं न करोति, एकदा पि

पुण्यं च कृत्वा स्वर्गसुखभाग्जातः ॥ इति दरिद्रोपरि निःपुण्यककथा समाप्ता ॥ अथ चतुस्त्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—जो पुण दायी विणयजुउ । चारित्तगुणसयाइन्नो ॥ सो जणसयविरकाउ । महड्ढिउ होइ लोगंमि ॥ ४ए ॥ व्याख्या—यः पुरुषो दानी विनयी च भवति, पुनर्यश्चारित्रगुणशतेन सहितो भवति, स पुरुषो जनशतमध्ये प्रसिद्धीभूयास्मिन् लोके महर्द्धिको भवति पुण्यसारवत्. ॥ ४ए ॥ तस्य कथामाह—साकेतपुरे नगरे भानुनामा राजा राज्यं करोति, तत्र धनाख्यः श्रेष्ठी वर्त्तते, तस्य धनदत्ताभिधा भार्यास्ति; एकदा सा धनदत्ता रात्रौ स्वप्नमध्ये रत्नैर्भृतं स्वर्णकलशं पश्यति, प्रातरुत्थाय तया निजभर्त्तारंप्रति स वृत्तांतो निवेदितो यथा हे स्वामिन् मयाद्य रात्रौ स्वप्ने रत्नपूर्णः स्वर्णकलशो दृष्टः, तस्य मम किं फलं भविष्यति? तत् श्रुत्वा भर्त्रा स्वमनसि तत्स्वप्नार्थं विचार्योक्तं हे प्रिये एतत्स्वप्नानुसारेण तव भाग्यवान् पुत्रो भविष्यति. इति श्रुत्वा सा हृष्टा जाता, क्रमेण नवभिर्मासैस्तस्याः पुत्रोऽभूत्. ततो वर्द्धापनिकापूर्वकं तस्य पुत्रस्य पुण्यसार इति नाम दत्तं. क्रमेण स बालः पंचवार्षिको जातः,

ग्राह्या, परं त्वयाऽन्या पिच्छा न ग्राह्याः, अथ स निष्पुण्यको नित्य तथैव करोति अथैवं कुर्वतस्तस्य कतिचिद्दिवसानतरमिति कुबुद्धिरुत्पन्ना यदहमत्रैकाक्येव कियद्दिनानि तिष्ठामि? इति विचार्य स दुर्जनशिरोमणिः प्रजाते नृत्यतो मयूरस्य सर्वानपि पिच्छानाकर्षयितुं लग्नः, तत्क्षणमेव स मयूरः काकरूपो जातः, देवाधिष्ठितेन तेन काकेन च स चंचुप्रहारतो विदारितः, पूर्वेऽपि च ये पिच्छा गृहीता आसन् तेऽपि सर्वे काकपिच्छाः संजाताः, उक्त च—

भाग्यानुसारिणी सिद्धि—र्बुद्धि कर्मानुसारिणी ॥ दानानुसारिणी कीर्त्ति—र्लक्ष्मीः पुण्यानुसारिणी ॥ १ ॥ उतावल कीजे नही। कीधे काज विनास॥ मोर सोनानो कागडो। करी हुओ घरदास ॥ १ ॥ अथ स निजात्मान निंदयित्वा निजात्मघात कर्त्तुं पर्वतोपर्यारूढ, इतस्तत्रैक मुनि दृष्ट्वा स तस्मै प्रोचे भो मुने मम धनप्राप्त्युपायं वद? तदा मुनिनोक्त इह भवे तव भाग्ये धन नास्ति, यतस्त्वया यो देव आराधितस्तेन देवेनापि त्वद्भाग्यवशान्मयूरात्काकः कृतः, त्वया पूर्वभवे दान न दत्त, नियमो न पालितः, पुनर्विनयोऽपि न कृतः, अतः कारणादेव त्व दरिद्री जातः, इति श्रुत्वा स जातिस्मरण प्राप्य वैराग्याच्च दीक्षा गृहीत्वा

न्निजन्नांमागारे मुक्तं, तृतीयदिनेऽपि तथैव पुनर्जातं; ततः पुण्यसारेण राज्ञे प्रोक्तं, हे महाराज! युष्माकं न्नांमागारमध्ये कियन्निधानं जातं तत्पश्यत? तदा राज्ञा न्नांमागाराधिपतिमाकार्य कथितं त्वं न्नांमागारात्तानि मुक्तानि निधानान्यत्रानय? तदा स न्नांडागारे गत्वा तानि पश्यति, परं तत्रैकमपि तन्निधानं तेन न दृष्टं; ततो राज्ञोऽग्रे समागत्य तेन तथैवोक्तं. तदा राज्ञा चिंतितं मया लोन्नेनास्य गृहान्निधानं गृहीतं, परं मे न्नाग्यंविना तन्निधानं मन्नांमागारे न तिष्ठति, नूनमेतन्निधानं पुण्यसारस्यैव न्नाग्यमध्येऽस्ति, अतोऽहमेनं पुण्यसारं नगरश्रेष्ठिनं करिष्यामि; इति विचार्य राज्ञा पुण्यसारायैकां स्वर्णमुद्रिकां वस्त्राणि च दत्वा तं च नगरश्रेष्ठिनं विधाय वादित्रनादपुरस्सरं स तस्य गृहे प्रेषितः, एवं स पुण्यसारो निजशुन्नकर्मोदयात्सुखानि भुनक्ति.

अस्मिन् समये सुनंदनामा केवली तत्र समवसृतः, तं वंदितुं सपरिवारो राजा तत्र गतः, पुण्यसारोऽपि निजपितृसहितस्तत्र समायातः, वंदित्वा च सर्वेऽग्रे स्थिताः, धर्मोपदेशश्रवणानंतरं धनमित्रस्तं केवलिनंप्रति पृच्छति, हे न्नगवन् अनेन पुण्यसारेण पूर्वन्नवे किं पुण्यं

तदा पित्रा स पंडितपार्श्वे पाठितः, तेन स महाविद्यावान् कलावांश्च जातः, यौवने च तेन कस्यचित् श्रेष्ठिनः कन्या परिणीता, तया समं च सुखं भुनक्ति. क्रमेण तस्य पुण्यसारस्यैकः पुत्रो बभूव.

अथैकदा पुण्यसारो रात्रौ सुप्तोऽस्ति तस्मिन् समये लक्ष्मीदेवतयागत्य तस्मै प्रोक्तं हे पुण्यसार! प्रातरहं तव गृहे प्रवेशं करिष्यामीत्युक्त्वा सा लक्ष्मीरदृश्या जाता; स तु जागरूक एवासीत्. अथ प्रभाते स पुण्यसारो गृहस्य चतुःकोणकेषु स्वर्णभृतांश्चतुःकलशान् पश्यति, तदा तेन विचारितं ध्रुवमद्य रात्रौ मया या लक्ष्मीर्दृष्टा सा सत्यैव जाता; अथाहमिमां वार्तामद्यैव राज्ञे निवेदयिष्यामि, चेदहं तथा नकरिष्यामि, तदा कोऽपि दुर्जनश्चेदिमं वृत्तांतं राजानं कथयिष्यति तदा महानर्थो भविष्यति इति विचार्य पुण्यसारेण राज्ञः पार्श्वे गत्वा प्रोक्तं हे स्वामिन् मम गृहे निधानं प्रकटितमस्ति. तत् श्रुत्वा राजा तन्निधानं द्रष्टुं तस्य गृहे समागतः, दृष्ट्वा च तन्निधानं विस्मयं प्राप्य स्वभाण्डागारे मुक्तवान्. द्वितीयदिने पुण्यसारेण पुनरपि तथैव निधानं स्वगृहे दृष्टं, कथितं च तेन राज्ञे, तदा राज्ञापि तथैव त-

रोगी जायए पुरिसो ॥ ५० ॥ व्याख्या—यः पुरुषो विश्वासं कृत्वा जीवं मारयति, मनसि शुद्धालोचनां च न गृह्णाति, स पुरुषो मृत्वाऽन्यजन्मानि रोगी जायते ॥ ५० ॥

गाथा—वीसत्थरक्खणपरो । आलोइय सव्वपावठाणो य ॥ जो मरइ अन्न जम्मे । सो रोगविवज्जिओ होइ ॥ ५१ ॥ व्याख्या—यः पुरुषो विश्वासिनं जीवं रक्षति, पुनरात्मनः सर्व-पापस्थानान्यालोचयति, अर्थात्प्रायश्चित्तं गृह्णाति, स पुरुषो मृत्वाऽन्यजन्मनि रोगविवर्जितो भवति ॥ ५१ ॥ अत्राट्टणमल्लकथा—उज्जयिन्यां नगर्यां जितशत्रुराजा राज्यं करोति, तस्य राज्ञः पार्श्वे एकोऽट्टणाख्यो मल्लोऽस्ति, स च बहुकलापारीणोऽस्ति. अथ सोपारकाभिधन-गरे सिंहगिरिनामा राजा राज्यं करोति, स राजा प्रतिवत्सरं महोत्सवं कारयति, तस्य रा-ज्ञः पार्श्वेऽप्येको मल्लोऽस्ति, अथ सोऽट्टणमल्लः प्रतिवर्षं सोपारकनगरे समागत्य तस्य राज्ञो मल्लं जयति, तथा च कृत्वा सोऽट्टणमल्लस्तस्य राज्ञः पार्श्वाद् बहुद्रव्यं समधिगच्छति.

अथान्यदा तेन सोपारकराज्ञा चिंतितं विदेशीयोऽयं मल्लः प्रतिवर्षं मम सभायां समा-गत्य मदीयं मल्लं जित्वा बहुद्रव्यं प्राप्नोति, मदीयश्च कोऽपि मल्लस्तं न जयति एतद्वरं न,

कृत ? येनेदृशी लक्ष्मीस्तेन लब्धा, पुना राजमानमपि तेन प्राप्तं. तदा गुरुणा प्रोक्तं नो धनमित्र शृणु ? अस्मिन्नेव नगरे धनदत्तनामा कुमारोऽभूत्, येन धनदत्तेन द्वात्रिंशदनक्षयाणां तथा द्वात्रिंशदनतकायाना च नियम गृहीतमासीत्, पुनस्तेन सुपात्रे दानं वितीर्णमासीत्, तथैव वृद्धाना तेन विनयोऽपि च विहितोऽभूत्, इति तेन सम्यक्प्रकारेण श्राद्धधर्मः पालितोऽभूत् कियत्कालानतरं स दीक्षा गृहीत्वा श्रुत च पठित्वा प्रातेऽनशनं विधाय तृतीये देवलोके इन्द्रस्य सामानिक सुरोऽभूत्, ततश्च च्युत्वाऽय तव पुत्रः पुण्यसारः स जातः, एवं निजपूर्वभव श्रुत्वा पुण्यसारो जातिस्मरण प्राप, ततोऽसौ निजकुटुबभार स्वपुत्रे न्यस्य स्वय च श्रीसुनदकेवलिन पार्श्वे दीक्षा जग्राह, निरतिचार चारित्र प्रपाल्य स देवो जातः, पश्चान्मनुष्यभवं प्राप्य स मोक्षे यास्यति. यतः—जिण पुजे वदे गुरु । भावे दान दीयत ॥ पुण्यसार जिम तेहने । रुद्धि अचिति हुत ॥ १ ॥ इति पुण्यसारकथा समाप्ता ॥ अथ पंचत्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—वीसत्थघायकारी । सम्ममणालोइऊण पडिंतो ॥ जो मरइ अन्नजम्मे । सो

दाऽट्टणमल्लेन ते सर्वेऽपि तस्य प्रहारास्तैलाभ्यंगादिना सज्जीकृताः, अथ राज्ञा मत्सीमल्लायादाऽट्टणमल्लेन ते सर्वेऽपि तस्य प्रहारास्तैलाभ्यंगादिना सज्जीकृताः, अथ राज्ञा मत्सीमल्लाया-
पि तथैव पृष्टं, परं तेन लज्जया स्वप्रहारा न दर्शिताः, कथितं च मम तु क्वापि प्रहारो न ल-
ग्नोऽस्ति. अथ द्वितीयदिने पुनरपि तयोर्मल्लयुद्धं जातं, तदा मत्सीमल्लो हारितः, फलहीम-
ल्लस्य च बहु यशो जातं, नृपाच्च तेन बहु धनं लब्धं. एवं सत्यकथनतः फलहीमल्लः सुखी
जातः, असत्यकथनतश्च मत्सीमल्लो दुःखी जातः, एवं यः कश्चिद्गुरोरग्रे निजं पापं सत्येना-
लोचयति सोऽट्टणमल्लफलहीमल्लवच्च सुखी निरोगी च भवति, यः कश्चिल्लज्जया गुरोरग्रे स-
म्यं न वक्ति, स मत्सीमल्लवद्दुःखी भवति. उक्तं च—पाप आलोवे आपणां । गुरुआगल निः-
शंक ॥ नीरोगी सुखीया हुवे। निर्मल जीसो ससांक ॥ १ ॥ इत्यट्टणमल्लकथाऽऽलोचनोपरि ॥

अथ षट्त्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—लहुहत्थे अइधुत्तो । कूडतुलाकूडमाण भंडेहिं ॥ ववहरइ नियडिं बहुलो । सो हीणंगो भवे पुरिसो ॥ ५२ ॥ व्याख्या—यः पुरुषो धूर्त्तः सन् हस्तलाघवेन कूटतोलनेन कूटमापभरणेन च तथा कुंकुमकर्पूरमंजिष्ठादिभेलनेन च व्यवसायं करोति, पुनर्मायां च

यतस्तेन मम मद्रव्यहानि प्रजायते, इति विचार्य स कंचिद्बलवंतं नरं विशोध्य तं मल्लक-ला शिक्षितवान्, तस्य च मत्सीमल्ल इति नाम विहितं. अथ वर्षांतरं निर्णीतदिने यदा सो-ऽट्टणमल्लः सोपारके नृपसभायां समागतस्तदा तरुणो नवशिक्षितो मत्सीमल्लस्तं जितवान्, तदा हृष्टेन राज्ञा तस्मै मत्सीमल्लाय बहुद्रव्यदानं दत्तं, पराजितश्चाट्टणमल्लः पश्चाद्वलित्वा सौराष्ट्रदेशमध्ये समागतः, इतस्तेनैको हली दृष्टः, स एकेन करेण हलं वाहयति, द्वितीयेन च फलहीमुत्पाटयति, स हली भोजनाय स्वस्थानके तेन सार्धं नीतः, तदा तस्य बहुभोज-नं दृष्टं, उत्सर्गसमयेऽपि च तस्य सुदृढपुरीषं दृष्ट्वाऽट्टणमल्लेन स मल्लकलां ग्राहितः, फल-हीमल्ल इति च तस्य नाम कृतं. पश्चात्तं फलहीमल्लं सार्धं गृहीत्वा सोऽट्टणमल्लः पुनरपि सोपारकनगरे मल्लयुद्धं कर्तुं समागतः, तत्र राजसभासमक्षं फलहीमल्लेन मत्सीमल्लसार्धं बहुविधं युद्धं कृतं, एवं तौ द्वावपि युद्धं कृत्वा तद्दिने तु निजनिजस्थाने गतौ.

तदाऽट्टणमल्लेन फलहीमल्लंप्रति पृष्टं, हे वत्स! तव शरीरे क्व क्व गाढप्रहारा लग्नाः सं-ति? तत्कथय? यथा तान् मर्द्दीकरोमि, तत् श्रुत्वा फलहीमल्लेन निजप्रहारा दर्शिताः, त-

जानामि, अयं संसारोऽसारः, ये दिवसा यांति ते नायांति, अतो मया दीक्षा गृहीता. तदा मयोक्तमस्माकं गृहे वासिन्नोजनमस्ति. तत् श्रुत्वा श्रेष्ठिनोक्तं हे वधु! त्वयाऽस्माकं गृहे वासिन्नोजनं कथं ज्ञातं? यतोऽस्मद्गृहे तु प्रत्यहं नवीना नवीना रसवती न्नवति, ततस्त्वयेदं वचः कथं प्रोच्यते? तदा वध्वा प्रोक्तं मया सत्यमेवोक्तमस्ति, न्नवद्भिः पूर्वन्नवे दानं दत्तं, एतत्पुण्यमाहात्म्यतश्च न्नवतामेतावती ऋद्धिः प्राप्तास्ति; एवं पूर्वन्नवोपार्जिता लक्ष्मीस्त्वया भुज्यते, अथ च किमपि चेदिह न्नवे न्नवता दानं न दीयते, तर्ह्यग्रेतने न्नवे किं न्नोक्ष्यते? इति वध्वा वचः श्रुत्वा स श्रेष्ठी हृष्टः सन् तां लघ्वीं वधूंप्रति सर्वं गृहन्नारं समर्पयामास, तां च वृद्धां कृत्वा स्थापयामास. अथ श्रेष्ठिनो दानं दातुमिछा जाता, ततोऽसौ सुपात्रे दानं वितरति, पुण्यं च करोति.

इतस्तस्य प्रेमलान्नार्याया दत्ताख्य एकः पुत्रो जातः. परं स हीनांगोऽन्नूत्. यौवनं प्राप्तं तं पुत्रंप्रति लोका हसंति, श्रेष्ठिना वैद्यानाकार्य तस्य तैलमर्दनादि बहव उपचाराः कृताः, परं तस्य गुणो न जातः, इतस्तत्र कश्चिन्मुनिर्न्निक्षार्थं समागतः, तं मुनिं वंदित्वा श्रेष्ठी पृ-

करोति, इति पापकरणेन स पुरुषो मृत्वा जन्मांतरे दीनांगो धनदत्तपुत्रवज्जायते अत्र सा धनदत्तपुत्रकथा प्रोच्यते, क्षितिप्रतिष्ठितनगरे ईश्वरनामा श्रेष्ठी वसति, तस्य प्रेमलाभिधा भार्या वर्त्तते, तस्य श्रेष्ठिनश्चत्वारः पुत्राः संति, श्रेष्ठिना पूर्वं ते सर्वेऽपि पाठिताः, पश्चाच्च परिणायिताः, स ईश्वरो वृद्धवयस्त्वाद्गृहे एव तिष्ठन् व्यवसाय करोति, परं कृपणत्वान्न किंचिदपि दानं ददाति, एवं स किंचिदपि पुण्य न विधत्ते, अथैकदा स भुक्त्वा गृहगवाक्षे स्थितोऽस्ति, अस्मिन् समये एकोऽष्टवार्षिको मुनिरीर्यासमितिसाधकस्तस्य गृहद्वारि आहारार्थं प्राप्तः, तदा तस्य श्रेष्ठिपुत्रस्यैका लघ्वी वधूस्तं मुनिंप्रति कथयति—वेलण खरी सवार । धम्मिणि वार न जाणीयें ॥ तम्मे लीधो अनाथ विहार । अम घर वासी जीमीयें ॥१॥ तत् श्रुत्वा मुनिस्तद्गृहं मुक्त्वाऽन्यत्र गतः,

अथ गवाक्षस्थितेन श्रेष्ठिना तत् श्रुत्वा निजवधूमाकार्य पृष्टं, हे वधु ! त्वया मुनये किमुक्तं ? तद्वद ? अथ सा वदति मया सत्यमुक्तं यथा भो वेलण अथ तव समयो नास्ति, अस्मिन् लघुवयसि त्वया दीक्षा कथं गृहीता ? तदा तेन साधुनोक्तं हे धर्मिणि वारं वेला न

समाप्ता ॥ अथाष्टत्रिंशत्तमप्रश्नोत्तरमाह—

गाथा—संजमजुत्ताण गुणवं—तयाण साहूण सीलकलियाणं ॥ मूत्त अवरणवाई । टुंटो पदन्हिघाएणं ॥ ५४ ॥ व्याख्या—यः पुरुषः संयमयुक्तानां पुनर्गुणवतां पुनः शीलकलितानां च साधूनामवर्णवादं वदति, स भवांतरे मूको बोवको भवति, पुनर्यः पुरुषः साधोः पादप्रहारं ददाति सोऽग्निशर्मावत् टुंटको भवति. अस्य कथा कथ्यते ॥ ५४ ॥

वडोड्डानगरे चतुर्दशविद्यानिधानो देवशर्मा ब्राह्मणो वसति, तस्याऽग्निशर्माभिधः पुत्रोऽस्ति, सोऽपि महाविद्यावान् वर्त्तते, परं स साधूनां निंदां करोति, मनसि च गर्वं वहति, धर्मवतां गुणवतां च दोषं कथयति, पित्रा निवारितोऽपि स तां निजचेष्टां न मुंचति. यतो दुग्धेन प्रक्षालितोऽपि काक उज्ज्वलत्वं न प्रयाति, तद्वत्सोऽपि निजस्वभावं न मुंचति; इतस्तस्मिन् समये कश्चिद् ज्ञानी साधुर्बहुपरिवारेण सहितस्तत्र समवसृतः, नागरिकजनास्तं वंदितुं समागताः, एवं तस्य साधोर्महिमानं दृष्ट्वा सोऽग्निशर्मा ब्राह्मणो निजहृदि अत्यंतं क्रोधं प्राप्नोति, लोकानां पुरश्च कथयति एषां पाखंडिनां सेवाकरणेन युष्माकं को लाभो भवि-

छति, हे मुनींद्र अस्य मे पुत्रस्यौषधं वद? तदा मुनिनोक्तं जीवस्य द्विधा रोगो भवति, द्रव्यरोगो भावरोगश्च तत्र प्रथमरोगस्य प्रतीकारं वैद्या जानंति, द्वितीयरोगस्य प्रतीकारं तु मम गुरवो जानंति. ते मम गुरवश्च वनमध्ये संति, अतस्त्वं तत्र गत्वा तंप्रति रोगोपायं पृच्छ? तदा श्रेष्ठी तत्र गत्वा मुनिं वंदित्वा पृच्छति, भो गुरो मम दत्ताख्यः पुत्रो गदहीनो जातोऽस्ति, तस्य कारणं वद? द्रव्यरोगो भावरोगश्च कथमुत्पद्यते? तथैव भावरोगस्य चिकित्साकरणेन किं भावरोगोऽपि प्रयाति?

तत् श्रुत्वा मुनिः प्राह तपःसंयमकरुणाकायोत्सर्गादिकरणतो भावरोगः प्रयाति. तव पुत्रस्यायं द्रव्यरोगो जातोऽस्ति, यतस्तत्र पुत्रेण पूर्वभवे लोभवशतो लोकानां वचनं कृतमस्ति, पुनः कूटतोलकूटमापकरणेन च तेन व्यवसायः कृतोऽस्ति. सरलवस्तूनि नीरसवस्तुभिः समेळ्य तेन विक्रीतानि संति, ईदृशं तेन पापकर्म कृतमस्ति, पुनरेकवारं तेन मुनये दानं दत्तं, तेन पुण्येन स तव पुत्रो जातोऽस्ति तत् श्रुत्वा स दत्तो नियमं गृहीत्वा नमस्कारध्यानपरो मृत्वा देवलोके गतः, अतो भव्यैर्मुग्धानां वंचनं न विधेयं ॥ इति दत्तकथा

मतोयपूर्णा । ज्ञानं ह्रदो धर्मतटी दयोर्मिः ॥ तत्राभिषेकं कुरु पांडुपुत्र । न वारिणा शुद्ध्यति चांतरात्मा ॥ १ ॥

पुनस्त्वया यदुक्तं यूयं निर्गुणास्तदप्यसंगतं. वयं तु क्षमादयाक्रियादिगुणयुताः स्मः, उक्तं च—चित्तं ध्यानादिभिः शुद्धं । वदनं सत्यभाषणैः ॥ ब्रह्मचर्यादिभिः काया । शुद्धो गंगां विनाप्यसौ ॥ १ ॥ पुनस्त्वयोक्तं यल्लोकपार्श्वाद्यूयं पूजां कथं कारयथ? तदपि तवोक्तमसत्यमेव. लोकाः स्वयमेवास्मान् गुणिनो दृष्ट्वा पूजयंति. युष्मादृशां ब्राह्मणानां पूजातः स्वर्गो न लभ्यते, यूयं केवलमपवित्राः स्थ, युष्मद्गृहे पशवोऽपत्यानि भार्याश्च वर्तंत, पुनर्यूयं क्रोधयुक्ता निर्दयाश्च स्थ, अतो युष्माकं पूजनात्कथं स्वर्गो भवति? पुनस्त्वयोक्तं यद्वयं यज्ञे छागान् हत्वा मोक्षे मुंचामस्तदप्यसत्यं. यतो यद्येवं भवति तदा युष्मद्भार्यापुत्रादीन् यज्ञे हत्वा कथं मोक्षे न मुंचथ? उक्तं च—यूपं कृत्वा पशून् हत्वा । कृत्वा रुधिरकर्दमं ॥ यद्येवं गम्यते स्वर्गे । नरके केन गम्यते ॥ १ ॥ इत्यादिवचनैस्तेन शिष्येण नगरलोकसमक्षं सोऽग्निशर्मा ब्राह्मणो जितः, अथ स ब्राह्मण ईर्ष्यायुतो निजगृहे गतः, रात्रौ चोत्थाय

प्यति? नूनमयं पाखडी वर्त्तते, अथैकदा स ब्राह्मणो लोकसमक्षं गुरुभिः सह वाद कर्तुं स-
मागतः, तत्रागत्य च तेनोक्त भो यूय शूद्रा अपवित्रा निर्गुणा वेदवाह्याः स्थ, अतो यूय लो-
कपार्श्वात्कथ पूजा कारयथ? वयं तु ब्राह्मणा वेदपारगामिनः पवित्राः स्मः, तेषां यो दान-
पूजादिक करोति स वैकुण्ठस्थाने गच्छति, किंच वर्णाना ब्राह्मणो गुरुरिति सर्वत्र लोकोक्तिर-
स्ति. पुनर्वय यज्ञे छागादीन् हत्वा मोक्षे मुचामः, तत् श्रुत्वा मुनेरेकः शिष्यो वदति वय-
मेव ब्राह्मणाः स्मः, यूयमेव च शूद्राः स्थ. उक्तच—

ब्राह्मणो ब्रह्मचर्येण । यथा शिल्पेन शिल्पिकः ॥ अन्यथा नाममात्रः स्या—दिंद्रगो-
पककीटवत् ॥ १ ॥ पुनर्वय ज्ञानादिभिस्त्रिभिः सहिता. स्म , पुन. केवल जलस्नानतः प्रा-
णिनः शौचयुता न भवंति, अन्यथा जलचरा अपि सदा शौचपवित्रिता भवेयु., मनःशुद्धि-
मेव शौचरूपा विद्वासो वदति, उक्तच—सत्य शौच तपःशौच—शौचमिंद्रियनिग्रहः ॥ सर्वभूतद-
या शौच । जलशौच च पचम ॥ १ ॥ चित्त रागादिभिर्दुष्ट । अलीकवचसा मुखं ॥ जीव-
हिंसादिभिः कायो । गगा तस्य पराङ्मुखी ॥ २ ॥ भागवत्पुराणेऽप्युक्त—आत्मानदी संय-

वं हलं वाहयित्वा स बलिवर्दान् तस्मान्मुक्तीकृत्य पानीयपानार्थं मुंचति, पश्चात्तेषां तृणानि चारयति, चेच्चारं न मिलति तदा स्वस्याऽदनस्य मध्यात्तेषां भागीकृत्यादनं दत्ते; एवंविधस्तस्य सर्वदा नियमो वर्त्तते. तस्य हैमीनाम्नी भार्या वर्त्तते, सापि सरलस्वभावास्ति, तस्याः कुक्षावुत्पन्नः कर्मणाख्यः पुत्रोऽभूत्, परं स रोगी पंगुश्चासीत् कर्मवशात्. अथ स युवा जातः सन् कृषेश्चिंतां करोति. स प्रत्यहं वृषभोपरि समारुह्य क्षेत्रे याति, तत्र गत्वा च त्रिगुणां भूमिं कर्षयति. लोभवशान्मध्याह्नानंतरमेव बलिबर्दान् हलान्मोचयति. परं तेषां कृते तृणपानीयादीनां चिंतां न करोति, क्रमेण ते बलीवर्दा दुर्बला जाताः, अतस्तस्य कृषिरपि समीचीना न भवति; एवं स प्रतिवर्षं कृषिं करोति, परं प्रचुरं धान्यं तस्य न भवति; तेन स क्रमेण निर्धनो जातः, तथापि पापं तु तथैव स करोति.

इतस्तत्र कश्चिद् ज्ञानी साधुः समागतः, तं वंदितुं सर्वे नगरलोका गताः, तौ पितापुत्रावपि गुरुं वंदितुं गतौ, तत्र देशनानंतरं तं गुरुंप्रति वल्लूकृषीवलः पृच्छति, हे भगवन्! ममायं पुत्रः पंगुः शरीरे रोगी निर्धनश्च कथं जातः? तदा गुरुः कथयति अनेन तव पुत्रेण पू-

वनमध्ये गत्वा तत्र सुप्तान् मुनीन्प्रति स पादप्रहारं दत्तवान्, मुष्टिप्रहारं च कृतवान्, तदा वनदेवतया निवारितोऽपि स न निवृत्तः, तदा वनदेवतया तस्य चरणौ छेदितौ, प्रभाते लोकास्त तथास्थं दृष्ट्वा तस्य निंदां चक्रुः, यदेतस्य साधोरवहीलनाफलमीदृशं जातं, अथ तत्पीडया स मृत्वा प्रथमनरके नारकी बभूव, ततश्च्युत्वा स दरिद्रिकुले पाखंडनामा पुत्रो जातः, पूर्वकर्मदोषाच्च स मूकटुंटकश्चाभूत्, स यावदष्टवार्षिकोऽभूत् तावत्तस्य पितरौ मृतौ, तदासौ भिक्षां कृत्वा स्वोदरं बिभर्ति, एवं स भूरिसंसारं भ्रमिष्यति ॥ इत्यग्निशर्मकथा ॥ अथ चत्वारिंशत्तमप्रश्नोत्तरमाह—

गाथा—जो वाहइ निस्संसो । ढाउभारंपि दुक्खिय जीवं ॥ मारेइ गत्तसंधि । गोयम सो पंगुलो होइ ॥ ५४ ॥ व्याख्या—यः पुरुषो निर्दयः सन् वृषभादिजीवोपरि भारं वाहयति, पश्चात्तान् कुट्टयति, तेषामंगानि छिनत्ति, गात्रस्य संधौ च मर्मघातं ददाति, स पुरुषो हे गौतम ! मृत्वा पंगुर्भवति, कर्मणवत्, तस्य कथा कथ्यते—सुग्रामनामनि ग्रामे कश्चिद्भल्लूनामा कर्षको वर्त्तते, स दयावान् संतोषी चास्ति, स नित्यं शनैः शनैर्हलं वाहयति, ए-

पाटणनगरे देवसिंहनामा धनवान् श्रेष्टी वसति, तस्य देवश्रीनाम्नी भार्या वर्त्तते; सा सरदा स्नेहवती चास्ति. अथैकदा रात्रौ तया सुप्तया स्वप्नमध्ये पुष्पैर्युतमेकमाम्रफलमाकाशाडुत्तीर्य स्वमुखेप्रविष्टं दृष्टं. पश्चाज्जागरितया तया स निजस्वप्नवृत्तांतो भर्त्तुः समीपे कथितः, तत् श्रुत्वा भर्त्रोक्तं हे प्रिये तव पुत्ररत्नं भविष्यति, स चाम्रवद्बहूनामाधारभूतो भविष्यति. एतत्स्वप्नफलं ज्ञात्वा साऽतीवहृष्टा संजाता; क्रमेण गर्भवती सा नवभिर्मासैर्लक्षणोपेतं पुत्ररत्नमजनयत्. दास्या श्रेष्टिनोऽग्रे पुत्रजन्मवर्द्धापनिका दत्ता. जन्मतो दशदिवसानंतरं श्रेष्टिना मिष्टान्नैर्निजकुटुंबं भोजयित्वा तस्य पुत्रस्य जगत्सुंदर इति यथार्थं नाम विहितं. क्रमेण यदा स सप्तवार्षिको बभूव तदा पित्रा लेखकशालायां कलाचार्यस्य पार्श्वे सकलाः कलाः पाठितः, एवं स विवेकविनयसौभाग्यौदार्यगांभीर्यधैर्यादिगुणोपेतो जातः, पश्चाच्च स यदा यौवनं प्राप्तस्तदा पित्रा तस्य बह्व्यः कन्याः परिणायिताः, एवं स निजस्त्रीभिः समं सुखं भुंक्ते, तथैव स देवगुर्वोः संघस्य च भक्तिं करोति; एवं स जिनधर्मेऽतीवरक्तोऽभूत्. स प्रत्यहं दानं ददाति, हीनदीनानां जनानां चोद्धारं करोति.

र्वजन्मनि कृषिकरणे तृषार्त्ता· क्षुधार्त्ताश्च बलिवर्दा अतीवबाधिताः, तेषां संधिषु घाताश्च कृ·
ता·, तद्दुष्कर्मणश्च तेन पश्चात्तापोऽपि न कृतः, स ततो मृत्वाऽत्र तव पुत्र· पंगू रोगसहित·
श्च जातः, तत् श्रुत्वा स वल्लूकपीवलो जातवैराग्यो निजपापानि क्षामयित्वा दीक्षां गृही·
त्वा विहर्तुं लग्नः, तस्य पुत्र· कर्मणोऽपि श्राद्धधर्मं प्रतिपाद्यायाते च स्वर्गजाग्वज्जूव ॥ इति
कर्मणकथा समाप्ता ॥ अथैकचत्वारिंशत्तमप्रश्नोत्तरमाह—

गाथा—सरलसहावो धम्मिक—माणसो जीवरक्कणपरो य ॥ देवगुरुसंघजत्तो । गो·
यमससुरूवयो होइ ॥ ५५ ॥ व्याख्या—य· पुरुषश्छत्रदम्वत्सरलस्वजावो जवति, पुनर्य·
स्य धर्मकर्मणि मनो वर्त्तते, पुनर्यो जीवो देवस्य संघस्य गुरोश्च जक्तिं करोति, स पुरुषो हे
गौतम! सुरूपवान् जवति. ॥ ५५ ॥ गाथा—कुम्लिसहावो पावप्पिज्ज य । जीवा·
ण हिंसणपरो य ॥ देवगुरुपमिणीज्ज । अचत्तं कुरूवज्ज होइ ॥५६॥ व्याख्या—य· पुरुषः कु·
टिलस्वजाव·, पुनर्यः पापप्रियो जवति, पुनर्यो जीवहिंसापरो जवति, देवगुरूपरि च द्वेष व·
हति, स जीवो मृत्वाऽतीवकुरूपो जवति अथ तद् दृष्टांतेन दृढयति. ॥५६॥ अत्र कथा—

वान् रोगी च जातः, लघुपुत्रस्तु कुटो दुर्भगः पापरुचिश्च जातोऽस्ति. तत् श्रुत्वा गुरुः कथयति—अस्मिन्नेव नगरेऽस्माद्भवात्तृतीये भवे जिनदेवशिवदेवनामनी मित्रेऽभूतां. तयोर्मध्ये जिनदेवो जैनधर्मी श्राद्धः सरलचित्तो देवगुरुभक्तियुतो जीवरक्षाकारकश्च सर्वत्र प्रसिद्धोऽभूत्. द्वितीयः शिवदेवश्च मिथ्यात्वदुष्टपरिणामी देवगुरूपरिद्वेषकृत् जीवहिंसातत्परश्चासीत्. अथ स जिनदत्तश्राद्धो मृत्वा प्रथमदेवलोके देवत्वं प्राप्तः, द्वितीयः शिवदेवोऽपि मृत्वा प्रथमनरके नारकी जातः, ततश्च्युत्वा जिनदत्तजीवोऽयं तव पुत्रो जगत्सुंदरो जातः, शिवदेवजीवश्च च्युत्वाऽयं तवाऽसुंदराख्यः पुत्रो जातः, अधुनाऽप्यस्य बहुभवभ्रमणं भविष्यति. जगत्सुंदरस्तत् श्रुत्वा जातिस्मरणं प्राप्य दीक्षामादाय मोक्षे गतः ॥ इति जगत्सुंदराऽसुंदरयोः कथा संपूर्णा ॥ अथ त्रयश्चत्वारिंशत्प्रश्नोत्तरमाह—

गाथा—जो जंतु दंमकरखग्ग–कुंतिहिं कुणइ वेयणाउ ॥ सो पावइ निःकरुणो । परंमि बहुवेयणा पुरिसो ॥ ५७ ॥ व्याख्या—यः पुरुषो जंतून् दंडैः कराभ्यां खड्गेन कुंतेन, उपलक्षणात्पाशबंधादिभिर्वेदनाः करोति, स निष्कारुण्यः पुरुषः परभवे बहुवेदनाः प्राप्नोति.

अथ पुनरेकदा तया देवश्रियैको दवदग्धो वृक्षः स्वमुखे प्रविशन् दृष्टः स्वप्नमध्ये, अशुभस्वप्नत्वाच्च तया भर्त्रे तत्स्वप्नवृत्तान्तो न कथितः, अथ पूर्णावधौ तस्या दवदग्धवृक्षवत्कृष्णवर्ण एकः पुत्रोऽभूत्, स पुत्रश्चिपिटनासिको चतुरस्त्रिशिरा लघुकर्णबाहुस्तुच्छहृदयः स्थूलोदरो दीर्घजंघः शरीरे बहुरोमयुतो दुर्भगश्च संजातः, तं दृष्ट्वा सर्वैर्लोकैस्तस्य असुंदर इति यथार्थनाम दत्तं, क्रमेण सोऽसुंदरोऽपि यौवनं प्राप्तः, परं दुर्भगत्वात्तस्मै कोऽपि कन्यां न ददाति, एकदा पित्रा तस्मै प्रोक्तं भो वत्स ! त्वया पूर्वभवे किमपि धर्मकार्यं न विहितं, तेन त्वं मनोवांछितं न लभसे अतस्त्वं धर्मं कुरु ? येन धर्मेण तव सर्वं शुभं भविष्यति एवं पित्रोक्तोऽपि स मूर्खो धर्मं न करोति इतस्तत्र नगरे चतुर्ज्ञानधरः सुव्रताख्यो गुरुः समागतः, तं वंदितुं पुत्रसहितो देवसिंहो गतः, तत्र च गुरोरुपदेशं श्रुत्वा स तथा हृष्टो जातो यथा घनगर्जितं श्रुत्वा मयूरो हर्षं प्राप्नोति

अथ देशनानंतरं स करौ नियोज्य गुरुं प्रति पृच्छति, हे भगवन् ! द्वाभ्यां मम पुत्राभ्यां किं किं पुण्यं पापं च विहितमस्ति ? येन तयोर्मध्यादृक्शो मे पुत्रो गुणवान् सौभाग्य-

हंति, तस्य शरीरान्महादुर्गंधः प्रादुर्भवति, एवं स इहैव नरकस्य दुःखान्यनुभवति. तत् श्रुत्वा गौतमस्य हृदि तं द्रष्टुं कौतुकमुत्पन्नं. तदा भगवता तस्मै प्रोक्तं हे गौतम चेत्तव मनसि कौतुकमस्ति, तर्हि त्वं तत्र याहि? तं च पश्य? एवं श्रीवीरस्यादेशाद्गौतमो राज्ञो गृहे गतः, गौतममागतं दृष्ट्वा नृपराज्यौ हृष्टे, ताभ्यां कथितं हे भगवन्नद्य युष्माकमत्रागमनेनास्माकं मद्भाग्यं प्रकटीभूतं,

अथ गौतमः प्राह हे राजन् अहमत्र तव पुत्रदर्शनार्थमागतोऽस्मि. तदा भूमिगृहस्थितोऽसौ पुत्रस्तया दर्शितः, गौतमस्तं तथास्थं दृष्ट्वाऽतीव निर्वीण्णः सन् श्रीवीरसमीपे समागतः, प्रभुंप्रति च पृष्टवान् हे भगवन्! अनेन मृगापुत्रेणैवंविधं किं पापं कृतमस्ति? येनायमेवंविधो दुःखभाग्जातोऽस्ति. तदा प्रभुः कथयति भो गौतम अस्य संबंधं शृणु?

शतद्वारनगरे नरपतिराजा वर्त्तते, तस्यैको विजयवर्द्धननामा मंत्री विद्यते, स पंचशतग्रामाणामधिकारी राज्ञा कृतः, स महारौद्रपरिणामी क्षुद्रबुद्धिः पापकर्मा बभूव. लोकेभ्योऽसावधिककरान् गृह्णाति, नवनवकरांश्च स्थापयति, पुनरसौ लोकानामुपरि कूटकलंकान्

॥ ५७ ॥ अथ तदुपरि कथा कथ्यते—अस्मिन् जंबूद्वीपे भरतक्षेत्रे मृगग्रामे विजयाभिधो राजा राज्यं करोति, तस्य मृगावत्यभिधाना राज्ञी वर्त्तते, तया समं स राजा विषयसुखानि भुनक्ति. इतः श्रीमहावीरप्रभुर्विहरंस्तत्र ग्रामे समवसृतः, तदा तस्य प्रभो. सार्थे श्रीगौतमप्रभृतयो बहव ऋषीश्वरा आसन् तत्र देवैः समवसरणं विहितं, द्वादशपर्षदश्च तत्र मिलिताः, तदा श्रीमद्भगवतो महावीरस्य योजनगामिनीं वाणीं श्रुत्वा सर्वेऽपि सहर्षा जाताः।

तस्मिन् समये कश्चिदेक पुरुषो जात्यधः करचरणांगुलीभी रहितो दुर्गंधश्च केनापि प्रकारेण तत्र समवसरणे समागतः लोकास्तं दृष्ट्वा निंदंति, तं दृष्ट्वा श्रीगौतमो वीरप्रभुंप्रति पृच्छति हे भगवन्! अनेन पुरुषेण पूर्वभवे बहुविधानि पापानि कृतानि भवेयुः, येनायमीदृश कुष्टरोगी जातोऽस्ति, लोकाश्च य दृष्ट्वा कुत्सां कुर्वंति तत् श्रुत्वा श्रीवीरः कथयति हे गौतम त्वमतोऽप्यधिकमाश्चर्यं शृणु? अस्मिन्नेव ग्रामे एको राजपुत्रोऽस्ति, सोऽतीवदुःखी बधिरः पंगुर्नपुंसकश्चास्ति तथैव तस्य द्वौ हस्तौ पादौ चापि न संति तस्य शरीरेऽष्टौ नासिका मध्ये वहंति, अष्ट च नाड्य शरीराद्बहिर्वहंति, पुनस्तस्याष्टभ्यो नाडीभ्यो रक्तादि व-

स्य गोत्रदेव्यपि सम्यग्दृष्टिर्बभूव. चतुर्मासानंतरं साधुर्विहारं कृत्वाऽन्यत्र गतः,

अथ स श्रेष्ठी सम्यक् प्रथमव्रतं पालयति; परं तस्य पुत्रो नास्ति, तेन स चिंतातुर-
स्तिष्ठति; अतोऽसौ देवदेवीगोत्रजादीन् पुत्रार्थमाराधयति; कुंकुमकर्पूरचंदनपुष्पधूपदीपैश्च
तान् पूजयति, पुनरसौ भूमिशयनं विधत्ते, तपस्तपति; अथ क्रमेण देवता तस्मै प्रसन्नाऽभू-
त्. देव्योक्तं भो चंदन तवोपर्यहं तुष्टास्मि, ततस्तवमनसि यस्येच्छा भवेत्तन्मार्गयस्व? तदा
चंदनेनोक्तं, हे मातर्मम पुत्रो नास्ति, अतस्त्वं पुत्रं देहि? तदा देव्या चिंतितं, प्रथममहं त-
स्य धर्मपरीक्षां कृत्वा पश्चात्तस्य पुत्रं यच्छामि, इति विचार्य देव्या तस्मै प्रोक्तं, हे श्रेष्ठिन्
यदि तव पुत्रस्येच्छा भवेत्तर्हि त्वं मे एकं जीवं हत्वा बलिं देहि? यदि तं बलिं चेन्मह्यं न
दास्यसि, तदाहं त्वां तव स्त्रियं चापि हनिष्ये.

तदा श्रेष्ठिनोक्तं भो देवि! त्वमेवं कथं जल्पसि? मया प्रथममेव प्राणातिपातव्रतस्य
गृहणं कृतमस्ति, अतस्तन्नियमस्य कथमहं भंगं करोमि? जीवहिंसया प्राप्यमाणस्य पुत्र-
स्यापि मे प्रयोजनं नास्ति, गृहीतं व्रतं कदाप्यहं न त्यजामि. इत्येतस्य वचः श्रुत्वा कुपिते-

ददाति, एवं तेन सर्वलोका निर्धना कृताः, इत्थंबहुविधपापकरणतस्तस्य तस्मिन्नेव भवे का-
सश्वासज्वरादय षोडश रोगाः समुद्भूताः, पश्चादार्त्तध्यानान्मृत्वा स प्रथमे नरके गतः, तत-
श्च्युत्वाऽथ विजयराज्ञ पुत्रोऽभूत, नपुंसको दुःखी च संजातः, अतोऽकृत्य नैव कर्त्तव्य ॥
॥ इति मृगापुत्रकथा सपूर्णा ॥ अथ चतुश्चत्वारिंशत्तमप्रश्नोत्तरमाह—

गाथा—जो सत्तो वियाणत्तो । मोआवेइ बंधणाउ मरणाउ ॥ कारुण्णपुण्णहियउ । नो
असुहा वेयणा तस्स ॥ ५८ ॥ व्याख्या—यः पुरुषोऽन्यैः कैश्चिन्निगडितान् शृंखलाबंधनैर्ब-
द्धान् जीवान् बंधनान्मरणाद्वा मोचयति, पुनर्यो दयालुर्भवति, तस्य जीवस्य कदाप्यशुभा
वेदना न भवति, चंदनश्रेष्ठिपुत्रजिनदत्तवत्. ॥ ५८ ॥ अत्र जिनदत्तकथा—सुप्रतिष्ठितनगरे
चंदननामा श्रेष्ठी वर्त्तते, पर स भद्रकपरिणामोऽपि मिथ्यात्वी वर्त्तते, तस्य वाहिनीनाम्नी
भार्यास्ति, अथैकदा तस्य चंदनस्य गृहे कोऽपि जितेंद्रियः साधुः समागतः, तेन श्रेष्ठिना त-
स्मै साधवे प्रासुकमुपाश्रय दत्वा स तत्र चतुर्मासक स्थापितः, ततोऽसौ चंदनस्तस्य पार्श्वे
धर्मं शृणोति. धर्मं च श्रुत्वा तेन जीवहिंसानियमो गृहीतो भार्यया सह; अतः कारणात्त-

जिनदत्ताख्यः पुत्रो नीरोगी सुखी च केन कर्मणा जातः? तदा गुरुर्वदति त्वं सावधानतया शृणु?

अस्मिन्नेव नगरे धरणनामा वणिगभूत्, तस्य च साधारणाख्यः पुत्रोऽभूत्, स पापंविना वाणिज्यं करोति, पुनः पाशबद्धान् मृगबकतित्तिरप्रमुखान् जीवान्मोचयति, तथैव देवगुरुसंघानां भक्तिं करोति, श्रीशत्रुंजयप्रमुखतीर्थानां यात्रां करोति; पश्चात्स्वायुःक्षये स देवलोके देवोऽभूत्; ततश्च च्युत्वाऽयं तव पुत्रो जिनदत्ताख्यो बभूव. स पूर्वभवपुण्यकरणात्सुखी नीरोगी च जातः, इत्येवं श्रवणानंतरं पितापुत्रयोर्जातिस्मरणं समुत्पन्नं; तेन ताभ्यां वैराग्यतो दीक्षां गृहीतुं गुरवो विज्ञप्ताः, तदा गुरुभिरुक्तं युवयोरद्यापि बहु भोग्यकर्म विद्यते, अतो यूवां श्राद्धधर्मं स्वीकुरुतं. अथ तौ श्राद्धधर्मं प्रतिपद्य स्वगृहे समाजग्मतुः, अनेकदानपुण्यकार्याणि च कर्तुं लग्नौ, प्रांते तौ महाव्रतानि गृहीत्वा देवावभूतां. ततश्च्युत्वा मानुष्यभवं प्राप्य मोक्षे गतौ. ॥ इति जिनदत्तकथा समाप्ता ॥ अथ पंचचत्वारिंशत्तमप्रश्नोत्तरमाह—

गाथा—जया मोहोदओ तिव्वो। अन्नाणं खुमहाभयं ॥ कोमले नियणिज्जं तु । तया एगिंदियत्तणं ॥ १ ॥ व्याख्या—यदा जीवस्य मोहनीयकर्मणस्तीव्रोदयो भवति, पुनरसौ ज्ञा-

व देवी खड्गमुत्पाट्य तस्य जार्याया मस्तकं छेत्तु लग्ना. तदा पूत्कुर्वती सा निजजर्तारप्रति वक्ति, हे स्वामिन् त्वं कदाग्रहं मुंच? एतस्यै देव्यै च वलिं देहि? चेत्त्वं तस्यै वलिं न दास्यसि, तदा सा त्वामपि हनिष्यति; एवं स्त्रिया प्रेरितोऽपि श्रेष्टी न क्षुब्धः, तदा देवी हृष्टा जाता, कथयामास च जो श्रेष्टिन् नूनं त्वं धन्योऽसि, कृतपुण्योसि, मयेयं तव परीक्षा कृता, धर्मे दृढचित्तत्वात्तव योग्यः पुत्रो जविष्यति त्वयापि तस्य पुत्रस्याजिधानं जिनदत्त इति विधेयं; इत्युक्त्वा सा देव्यदृश्या जाता.

अथ कतिचिद्दिवसानंतरं तस्य मनोहरः पुत्रो जातः, चंदनश्रेष्टिना च महोत्सवपूर्वकं तस्य जिनदत्त इत्यजिधानं कृतं. पंचवर्षाणि यावत्तं लालयित्वा पित्रा स पाठितः, एवं तेन पुत्रेण सर्वा अपि विद्या. कलाश्च शिक्षिताः, क्रमेण स यौवनं प्राप्त, तदा पित्रा कुलीना योग्या च कन्या तस्मै परिणायिता, एवं स जिनदत्तः पितुर्जक्तो निरोगी च संजातः, स जिनदत्तो नित्यं देवान् पूजयति; इतो वनारामे कश्चिद् ज्ञानी गुरुः समागत, तदा पुत्रसहितश्चंदनस्तं वंदितुं गत, तत्र धर्मोपदेशश्रवणानंतरं चंदनश्रेष्टी गुरुं पृच्छति, हे जगवन् ममाय

द्धिमान् चतुरश्च संजातः, एवं स निजपितुर्गुणाद्विपरीतोऽभूत्. स लक्ष्मणः सदा सत्सकेतेषु धनव्ययं कर्त्तुं लग्नः, तदा तस्य पित्रोक्तं हे वत्स! मया बहुदुःखेनैव धनमुपार्जितमस्ति, तद्धनं त्वं कथं निरर्थकं व्ययसि? तदा पुत्रेणोक्तं हे तात दानं ददतां जनानां धनं न कदापि क्षयति. उक्तं च—देहि दानं सुपात्रेभ्यो। ददन्न क्षीयते धनं ॥ कूपाराममगवादीनां। ददतामेव संपदः ॥ १ ॥ यथा कूपस्य नीरं, आरामात्फलानि, गोमहिषीभ्यो दुग्धं यथा यथा प्रत्यहं गृह्यते, तथा तथा तत्सर्वं वृद्धिं प्रयाति, एवं सुपात्रेभ्यो दत्तं धनं नित्यं वर्द्धते एव. उक्तं च—वसुधाभरणं पुरुषः। पुरुषाभरणं प्रधानतरलक्ष्मीः ॥ लक्ष्म्याभरणं दानं। दानाभरणं सुपात्रं च ॥२॥ अतो दानादेव लक्ष्मीर्वर्द्धते. एवं पुत्रेणोक्तोऽपि तत्पिता लोभं न त्यजति. अथैकदा चौरैः क्षात्रं दत्वा तस्य धनं निष्कास्य गृहीतं तद् ज्ञात्वा स मोहनदास उच्चैस्तरं रुदनं कर्त्तुं लग्नः, स भोजनमपि न करोति, तदा पुत्रेणागत्य तस्मै प्रोक्तं भो तात त्वं मा रोदीः? इयं लक्ष्मीश्चपलास्ति, अतस्त्वं भुंक्ष्व? एवं पुत्रेण कथिते सति स भोजनं करोति. अथ द्वितीयवर्षे तस्य भार्या मृता, तदा तन्मोहात् स मोहनदासोऽपि तद्गुणान्

नें न जानाति, महाभयाकुलश्च भवति, पुनर्यस्य सातावेदनीयं कर्म स्तोकतरं भवति, कुटुंबस्य च यो मूर्छा करोति, स जीवो मृत्वैकेंद्रियेषूत्पद्यते, बहुकालं च संसारे भ्रमति, मोहनवत् ॥ ५ए ॥ तस्य कथोच्यते—महीसारनगरे मोहनदासाख्यो वणिग्वसति, तस्य मोहनदासीति नाम्नी भार्या वर्त्तते, स मोहनदासो महाकृपणः सन् पित्रोपार्जितां लक्ष्मीं भुनक्ति, दिवसे केवलमेकवारमेव रूक्षमाहारमत्ति, पुनरसौ चौरभीत्या निजधनं भूमौ क्षिप्त्वा रक्षति, स्वयं च रात्रौ तस्य रक्षां करोति, परं रात्रौ सुखं न शेते नित्यमधौतानि स्थूलानि मलिनानि च वस्त्राणि स धारयति, कदापि दानं न ददाति, लोभवशाच्च स गुणवतः स्वजनानपि नोपलक्षयति, चेत्कश्चिद्याचकः सन्मुखं मिलति तदा स निजमुखं वक्रीकृत्य प्रयाति, परं तस्य याचकस्य सन्मुखमपि न विलोकयति. उक्तं च—किंतु करेरे कृपणवखाण । नवि ळळखे आव्या घर जाण ॥ ए तलमां नहीं तेल लगार। जे एहने वाढे ते गमार ॥ १ ॥ अथ क्रमेण तस्यैकः पुत्रो बभूव, तस्य च लक्ष्मण इति नाम प्रतिष्ठितं, मोहवशेन च स तं निजपुत्रं हस्तादपि न मुंचति. अथ बाल्यकाले गते सति स पुत्रो विवेकी बु-

मूढो । तस्स थिरो होइ संसारो ॥ ६० ॥ व्याख्या—यो नास्तिकवादी पुरुष एवं मन्यते चेवं कथयति यद्धर्मो नास्ति, पुनर्जीवोऽपि नास्ति, तथैव ऋषिरपि नास्ति, ईदृशस्य नास्तिकवादिनः पुरुषस्य बहुलतरः संसारो भवति, स मोक्षं न प्राप्नोतीति भावः ॥ ६० ॥

गाथा—धम्मोवि अत्थि लोए । अत्थि अहम्मोवि अत्थि सव्वन्नू ॥ रिसिणोवि अत्थि लोए । जो मन्नइ सोप्पसंसारी ॥ ६१ ॥ व्याख्या—जगन्मध्ये धर्मोऽप्यस्ति, अधर्मोऽप्यस्ति, सर्वज्ञोऽप्यस्ति, तथा ऋषिरप्यस्ति, एवं यः पुरुषो मन्यते स जीवोऽल्पसंसारी भवति, अर्थात्स जीवः शीघ्रं मोक्षे गच्छतीति, शूरवीरशिष्यौवत् ॥ ६१ ॥ तयोः संबंधमाह—राजगृहे नगरे एकस्य पंडितस्य पार्श्वे शूरवीरनामानौ द्वौ शिष्यौ पठतः, तयोर्मध्यादेकः शूराख्यः शिष्यो नास्तिकसंगान्नास्तिकवादी मूर्खो धर्ममार्गस्योच्छापकः कदाग्रही च जातः, पुनः स्वयं विचक्षणत्वादन्यान् सर्वानपि लोकांस्तृणसमान् गणयति; सुखार्थी लोकश्च तस्य वचो मन्यते. यतः—हंसा रज्जंति सरे । भमरा रज्जंति केतकीकुसुमे ॥ चंदनवने भुजंगा । सरिसा सरिसेहिं रज्जंति ॥ १ ॥

स्मृत्वा स्मृत्वा तद्दुःखान्मृत , अथ तस्य पुत्रो लक्ष्मणः पितुर्मृतकार्यं कृत्वा, संसारस्याऽसारता च विज्ञाय शोक न करोति पुनरसौ मनसि चिंतयति नूनमयं मोहो दुर्जयोऽस्ति, मत्पितापि मोहादेव मृत , अथ मोहो जीवस्य सन्निपातरूप एव, यस्तिमिर विनापि जीवानां चक्षुरावृणोति; अतो मोहस्य विलयेनैव जीवस्य सुख भवति, यावत् स एव मनसि विचारयति तावत्तत्र कश्चित् श्रुतकेवली गुरुः समागतः, तदासौ लक्ष्मणस्तत्र गत्वा गुरुं च नत्वा धर्मोपदेश श्रुत्वा गुरु पृच्छति, हे भगवन्! मम पितुः का गतिर्जाता? तदा गुरुणोक्त तव पिता धनकुटुंबमोहान्मृत्वा एकेंद्रियपृथ्वीकाये समुत्पन्नोऽस्ति, पश्चाच्च सोऽप्कायाग्निवायुवनस्पतिकायेषु समुत्पद्य बहुससारं भ्रमिष्यति. एवं गुरुमुखात् श्रुत्वा स वैराग्याद्दीक्षा गृहीत्वा सम्यक्प्रकारेण धर्ममाराध्य कर्मक्षय कृत्वा मोक्ष गतः, अतो भव्यजनैर्मोहो न कर्त्तव्य ॥ इति मोहविषये मोहनलक्ष्मणयोः कथा संपूर्णा ॥ अथ षट्चत्वारिंशत्तमप्रश्नोत्तरमाह—

गाथा—न य धम्मो न य जीवो । नो परलोगुत्ति न य कोइ ॥ रिसिपि नो मन्नइ

सुखदुःखं को जानाति? पुनस्त्वयोक्तं यत्पंचभूतेभ्यश्चैतन्यशक्तिः प्रजायते, तदपि तव वचनमसत्यमेव, यतस्ते पंचापि भूता अचेतनाः संति, ततोऽचेतनेभ्यः पदार्थेभ्यश्चैतन्यशक्तिः कथं प्रजायते? अत आत्माऽस्त्येव. पुनरेको दुःखी, एकश्च सुखी, एको दासः, एकश्च स्वामी, तत्सर्वं पूर्वकृतकर्मानुसारेणैव जायते, अतः कर्माण्यस्त्येव. ततोऽशुभकर्मणां क्षयकृते तपःसंयमादिक्रिया युज्यते एव. पुनर्धर्माधर्मस्य फलमिह परलोकेऽपि च ज्ञायते, अतो धर्मो विद्यत एव. तस्मात्कारणात्त्वं कदाग्रहं मुंच? एवमुक्तेनाऽपि सूरेण यदा निजकदाग्रहो न मुक्तस्तदा राजा तं सूरं निजनगरान्निष्कासयामास, एवं स सूरो बहुसंसारं भ्रमिष्यति. अथ स द्वितीयो वीरश्राद्ध आयुःक्षये मृत्वा देवलोके समुत्पन्नः, पश्चान्मनुष्यभवं प्राप्य च स मोक्षे यास्यति. ॥ इति सूरवीरयोः कथा संपूर्णा । अथाष्टचत्वारिंशत्तमप्रश्नोत्तरमाह

गाथा—जो निम्मलनाणचरित्त–दंसणेहिं विभूसियसरीरो ॥ सो संसारं तरिउं । सिद्धिपुरं पावए पुरिसो ॥ ६९ ॥ व्याख्या—यः पुरुषो निर्मलज्ञानदर्शनचारित्रैः संयुक्तो भवति स संसारसमुद्रं तरित्वा स्तोककालेन मोक्षं गच्छति, अभयकुमारवत्. ॥ ६९ ॥ अथ त-

अथ द्वितीयो वीराख्यस्तु साधुसंगत्या धर्मज्ञो जिनधर्मस्थापकश्च विद्यते. अस्मिन् समये कश्चिच्चतुर्ज्ञानी साधुस्तत्र समागतः, तं वंदितुं स वीरः सर्वलोकसहितस्तत्र गतः, स नास्तिकवादी सूरोऽपि साऽहंकारिग्वाकुरोर्मदिमान विज्ञायेर्ष्यया तत्रागतः, आगत्य चासौ साहंकार वच उक्तवान् भो साधो भवद्भिर्लोकाः कथं प्रतार्यंते? युष्माकं चेच्छक्तिरस्ति तदास्माभिः सह चतुरंग विवादं कुरुध्व? उत्तर च दत्वाऽस्माकमहंकार दूरीकारयध्वं? तदैकेन शिष्येणोक्तं भो सूर मम गुरुः सर्वज्ञोऽस्ति, त्वं तव पक्षं स्थापय? अहमेव त्वां निरुत्तरीकरिष्यामि. तत् श्रुत्वा सूरेणोक्तं इह धर्मो नास्ति, परलोकोऽपि नास्ति, आत्मापि नास्ति, पंचभूतैरेव निबद्धे शरीरे चैतन्यशक्तिरुत्पद्यते, यथा मधुकपिष्टादियोगान्मद्यशक्तिः, किं च प्राणिनां सुखदुःखस्य कारणमपि कर्म नास्ति.

यत एकस्य दृषद उपरि विष्टा क्रियते, द्वितीयश्चेदृगेव दृषत्पुष्पादिभिः पूज्यते, अतो जपतपोऽनुष्ठानादि सर्वमपि निष्फलमेव, इत्युक्त्वा स सूरः स्थिरीभूतः, तदा स शिष्यो वदति हे सूर! आत्माऽस्त्येव स्वसंवेद्यत्वात्, चेदात्मा न भवेत्तर्हि अहं सुखी, अहं दुःखी इत्यादि

थ राजा चेल्लणया सहितः श्रीवीरं वंदित्वा धर्मं च श्रुत्वा संध्याकाले पश्चाद्वलितः ।

अथ तस्मिन् शीतकाले मार्गे समागच्छंत्या चेल्लणाराज्ञ्यैकस्य सरसस्तीरे एको निर्व-स्त्रः साधुः कायोत्सर्गध्यानस्थो दृष्टः, तं दृष्ट्वा राज्ञ्या चिंतितमहो धन्योऽयं मुनिर्य एवं दुः-करं परीषहं सहते. अथ क्रमेण राज्ञी नृपेण सह गृहे समागत्य शय्यायां सुप्ता; निद्रावश-तश्चेल्लणाया एको हस्तोऽनाच्छादितो बभूव; अतीवशीतेन च तस्याः स हस्तोऽप्यतीवशीत-लीभूतः, कियत्कालानंतरं सा राज्ञी जागृता सती तं निजहस्तं वस्त्रेणाच्छादयामास. तस्मि-न् समये सा चेल्लणा राज्ञी मनसि तं कायोत्सर्गस्थं मुनिं स्मृत्वा स्मृत्वा स्वमुखे-नोच्चैःस्वरेण जगाद, अहो अस्मिन् शीतकले स निर्वस्त्रः किं करिष्यति? अथ तस्या ई-दृशः शब्दः श्रेणिकराज्ञा श्रुतः, तदा तेन हृदि चिंतितं नूनमियं मम पट्टराज्ञी असती ज्ञा-यते; अस्या हृदयेऽधुना कोऽप्यन्यः पुरुषो वसति. यमियं पुनः पुनः स्मरति.

अथ प्रभातेऽभयकुमारो यदा राजानं नमस्कर्त्तुं समागतस्तदा राज्ञा तंप्रतीत्यादिष्टं, भो अभयकुमार एतत्सर्वमप्यंतःपुरं त्वया ज्वालनीयं, इति कथयित्वा राजा स्वयं तद्विषये श्री-

स्याऽजयकुमारस्य संबंधमाह—मगधदेशे राजगृहनगर्यां श्रेणिकनामा राजा राज्यं करोति, तस्य राज्ञो वृद्ध पुत्रश्चतुर्बुद्धिनिधान. श्रीअजयकुमाराभिधोऽस्ति. श्रेणिकनृपोऽजयकुमारं राज्ययोग्य ज्ञात्वा तस्मै स्वराज्यं समर्पयितु वाञ्छति, पर स पापभीत्या राज्यं न गृह्णाति अथ तस्मिन्नवसरे राजगृहे नगरे गुणशीलाभिधे चैत्ये श्रीमहावीरः समवसृतः, तं वंदितु-मजयकुमारस्तत्र गतः, तत्रोपविश्य धर्मोपदेशं च श्रुत्वाऽजयकुमारः श्रीवीरप्रभुमिति पृच्छति, हे भगवन्नतिमो राजर्षिः को भविष्यति? श्रीवीर आह हे अजयकुमार अतिमराजर्षिरुदा-इनामा राजा भविष्यति. एवं श्रीवीरमुखात् श्रुत्वा उदायिराज्ञा दीक्षा गृहीता. तदा श्रीवी-रेणोक्तमथेदृश. कोऽपि राजा दीक्षां न गृहिष्यति, तदाऽजयकुमारः स्वपरिणामिकया बुद्ध्या चिंतयति, अह पितुराग्रहेणापि राज्य न लास्यामि, यतो राज्यग्रहणानतरं मे दीक्षा न भ-विष्यति. इति चिंतयन् स गृहे समागत., राज्ञापि तस्य दीक्षामनोरथो ज्ञातः, अथैकदा राज्ञाऽजयकुमारायोक्त अथाह चेल्लणाराज्या सह श्रीवीर वंदितु गच्छामि, त्वया त्वत्रैव स्थे-य, अस्माकमाज्ञां विना त्वया वीरसमीपे नैव गतव्य, अजयकुमारेणापि तच्चांगीकृत. अ-

ततः श्रेणिकराजा प्रभुं चाऽभयकुमारादीन् साधून्नत्वा स्वापराधं च क्षामयित्वा गृहे समागतः, अथाऽभयकुमारः शुद्धमनसा ज्ञानदर्शनचारित्रात्मकं रत्नत्रयं सम्यगाराध्य स्वायुःक्षये सर्वार्थसिद्धौ जगाम; एकावतारानंतरं च स मोक्षे यास्यति ॥ इत्यभयकुमारकथा संपूर्णा ॥

अथ शास्त्रफलं कथयति—

गाथा—जं गोयमेण पुठं । तं कहियं जिणवरेण वीरेण ॥ भवा भावेय सया । धम्माधम्मफलं पयमं ॥ ६३ ॥ व्याख्या—यद्गौतमेन पृष्टं तत् श्रीवीरेण जिनवरेण कथितं, अतो हे भव्यलोका एतद्धर्माऽधर्मफलं युष्माभिः प्रकटं यथा स्यात्तथा भावितव्यं. ॥ ६२ ॥

गाथा—अडयालीसा पुछो—त्तरेण गाहाण होइ चउसठी ॥ संखेवेणं भणिया । गोयमपुछा महछावि ॥ ६४ ॥ इति श्रीगौतमपृछावृत्तिः समाप्ता ॥ आ श्रीगौतमपृछावृत्ति नामनो ग्रंथ जामनगरनिवासि पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथः गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

वीर पृष्ठ गत., तत्र गत्वा प्रभुं वदित्वा स पृच्छति, हे भगवन्? सा मम राज्ञी चेल्लणा सत्यस्ति वाऽसत्यस्ति? तदा भगवतोक्त हे राजन्! चेटकराज्ञः सप्तापि पुत्र्यः सत्यः सति. इति श्रुत्वा राजा पुन पृच्छति हे भगवन् तर्हि अद्य रात्रौ चेल्लणया राज्ञ्यैवं कथ जल्पितं? तदा भगवता सर्वमपि तद्वृत्तात कथयित्वा तस्य सदेहो दूरीकृत., तदा राजा शीघ्रमेव ततः पश्चाद्वलित ।

अथात्राऽभयकुमारेण निजबुद्ध्यात पुरसमीपस्थमेक जीर्णं गृह प्रज्वालितं, ततः स्वय च राज्ञ॰ सन्मुख समायात., तदा राज्ञा पृष्ट हे अभयकुमार त्वया सर्वमेत पुरं ज्वालित वा कि? तदाऽभयकुमारेणोक्त मया सर्व कार्य कृत, अधुनास्ति ममाज्ञा? गच्छाम्यहं श्रीवीरप्रभुसमीपे? राज्ञापि सभ्रमवशात्तस्मै आज्ञा दत्ता शीघ्रमेव श्रीअभयकुमारोऽपि वीरप्रभुसमीपे गत्वा दीक्षा जग्राह, अथ गृहागतो राजा सर्वमप्यत॰पुरं समावियुक्त दृष्ट्वा हृष्टः, पश्चात्स शीघ्रमेव श्रीवीरप्रभोः समवसरणे समागत्याऽभयकुमारप्रति कथयामास, हे पुत्र! त्व पुनर्गृहे समागच्छ? तदाऽभयकुमारेणोक्त हे तात मया भवदाज्ञयैव दीक्षा गृहीतास्ति.

